अवान्तरबीजस्य संज्ञान्तरमाह ।

अवान्तरार्थविच्छेदे बिन्दुरच्छेदकारणम् ॥१६॥

यथा रत्नावल्यामवान्तरप्रयोजनानङ्गपूजापरिसमाप्तौ कथार्थविच्छेदे सत्यनन्तरकार्यहेतुरुदयनस्येन्दोरिवोद्वीक्षते । सागरिका । (श्रुत्वा) । [1]कहं एसो सो उदयणणरिन्दो जस्स अहं तादेण दिण्णेत्यादि । बिन्दुर्जले तैलबिन्दुवत् प्रसारित्वात् ।

इदानीं पताकादीन् प्रसङ्गाद् व्युत्क्रमोक्तं क्रमार्थमुपसंहरन्नाह ।

बीजबिन्दुपताकाख्य०        ०परिकीर्तिताः ॥१७॥

अर्थप्रकृतयः प्रयोजनसिद्धिहेतवः ।

अथावस्थापञ्चकमाह ।

अवस्थाः पञ्च०        ०फलागमाः ॥१८॥

यथोद्देशं लक्षणमाह ।

औत्सुक्यमात्रमारम्भः फललाभाय भूयसे ।

इदमहं सम्पादयामीत्यध्यवसायमात्रमारम्भ इत्युच्यते । यथा रत्नावल्याम् ।

प्रारम्भेऽस्मिन् स्वामिनो वृद्धिहेतौ
दैवे चेत्थं दत्तहस्तावलम्बे ।

इत्यादिना सचिवायत्तसिद्धेर्वत्सराजस्य कार्यारम्भो यौगन्धरायणमुखेन दर्शितः ।

अथ प्रयत्नः ।

प्रयत्नस्तु तदप्राप्तौ व्यापारोऽतित्वरान्वितः ॥१९॥

तस्य फलस्याप्राप्तावुपाययोजनादिरूपश्चेष्टाविशेषः प्रयत्नः । यथा रत्नावल्यामालेख्याभिलेखनादिर्वत्सराजसमागमोपायः । [2]तहावि णत्थि अण्णो दंसणउवाओ त्ति जहा तहा आलिहिअ जहा समीहिदं करिस्सम्

१ कथं एष स उदयननरेन्द्रः यस्याहं तातेन दत्तेत्यादि ।

२ विदू० । तथापि नास्त्यन्यो दर्शनोपाय इति यथा तथा आलिख्य यथा समीहितं करिष्यामि।

इत्यादिना प्रतिपादितः ।

प्राप्त्याशामाह ।

उपायापायशङ्काभ्यां प्राप्त्याशा प्राप्तिसम्भवः ।

उपायस्यापायशङ्कायाश्च भावादनिर्धारितैकान्ता फलप्राप्तिः प्राप्त्याशा । यथा रत्नावल्यां तृतीयेऽङ्के वेषपरिवर्ताभिसरणादौ समागमोपाये सति वासवदत्तालक्षणापायशङ्कया [1]'एवं जदि अआलवादाली विअ आअच्छिअ अण्णहा ण करिस्सदि वासवदत्ता' इत्यादिना दर्शितत्वादनिर्धारितैकान्ता समागमप्राप्तिरुक्ता ।

नियताप्तिमाह ।

अपायाभावतः प्राप्तिर्नियताप्तिः सुनिश्चिता ।

अपायाभावादवधारितैकान्ता फलप्राप्तिर्नियताप्तिरिति । यथा रत्नावल्यां विदूषकः । [2]'सागरिआ दुक्करं जीविस्सदि इत्युपक्रम्य किं ण उवायं चिन्तेसि । इत्यनन्तरं राजा । वयस्य देवीप्रसादनं मुक्त्वा नान्यमत्रोपायं पश्यामीत्यनन्तराङ्कार्थबिन्दुनानेन देवीलक्षणापायस्य प्रसादनेन निवारणात् नियता फलप्राप्तिः सूचिता ।

फलयोगमाह ।

समग्रफलसम्पत्तिः फलयोगो यथोदितः ॥२०॥

यथा रत्नावल्यां रत्नावलीलाभचक्रवर्तित्वावाप्तिरिति ।

सन्धिलक्षणमाह ।

अर्थप्रकृतयः … पञ्च सन्धयः ॥२१॥

अर्थप्रकृतीनां पञ्चानां यथासंख्येनावस्थाभिः पञ्चभिर्योगात् यथासंख्येनैव जायमाना मुखाद्याः पञ्च सन्धयो जायन्ते ।

सन्धिसामान्यलक्षणमाह ।

अन्तरैकार्थसम्बन्धः सन्धिरेकान्वये सति ।

एकेन प्रयोजनेनान्वितानां कथांशानामवान्तरैकप्रयोजनसम्बन्धः

---

१ एवं यदि अकालवातालीव आगत्य अन्यथा न करिष्यति वासवदत्ता ।

२ सागरिका दुष्करं जीविष्यति इत्युपक्रम्य किं न उपायं चिन्तयसि ।

सन्धिः ।

के पुनस्ते सन्धयः ।

मुखप्रतिमुखे गर्भः सावमर्शोपसंहृतिः ॥२२॥

यथोद्देशं लक्षणमाह ।

मुखं      बीजारम्भसमन्वयात् ॥२३॥

बीजानामुत्पत्तिरनेकप्रयोजनस्य रसस्य च हेतुर्मुखसन्धिरिति व्याख्येयम् । तेनात्रिवर्गफले प्रहसनादौ रसोत्पत्तिहेतोरेव बीजत्वमिति । अस्य च बीजारम्भार्थयुक्तानि द्वादशाङ्गानि भवन्ति । तान्याह ।

उपक्षेप      लक्षणम् ॥२४॥

एतेषां स्वसंज्ञाव्याख्यातानामपि सुखार्थं लक्षणं क्रियते ।

बीजन्यास उपक्षेपः

यथा रत्नावल्यां नेपथ्ये ।

द्वीपादन्यस्मादपि मध्यादपि जलनिधेर्दिशोऽप्यन्तात् ।
आनीय झटिति घटयति विधिरभिमतमभिमुखीभूतः ॥

इत्यादिना यौगन्धरायणो वत्सराजस्य रत्नावलीप्राप्तिहेतुमनुकूलदैवं स्वव्यापारं बीजत्वेनोपक्षिप्तवानित्युपक्षेपः ।

परिकरमाह ।

तद्बाहुल्यं परिक्रिया ।

यथा तत्रैव । अन्यथा क्व सिद्धादेशप्रत्ययप्रार्थितायाः सिंहलेश्वरदुहितुः समुद्रे प्रवहणभङ्गमग्नोत्थितायाः फलकासादनमित्यादिना सर्वथा स्पृशन्ति स्वामिनमभ्युदयाः इत्यन्तेन बीजोत्पत्तेरेव बहूकरणात् परिकरः ।

परिन्यासमाह ।

तन्निष्पत्तिः परिन्यासः

यथा तत्रैव ।

प्रारम्भेऽस्मिन् स्वामिनो वृद्धिहेतौ
दैवे चेत्थं दत्तहस्तावलम्बे ।

सिद्धेर्भ्रान्तिर्मयास्ति सत्यं तथाऽपि
स्वेच्छाकारी भीत एवास्मि भर्तुः ॥

इत्यनेन यौगन्धरायणः स्वव्यापारदैवयोर्निष्पत्तिमुक्तवानिति परिन्यासः ।

विलोभनमाह ।

गुणाख्यानाद् विलोभनम् ॥२५॥

यथा रत्नावल्याम् ।

अस्तापास्तसमस्तभासि नभसः पारं प्रयाते रवा-
वास्थानीं समये समं नृपजनः सायन्तने सम्पतन् ।
सम्प्रत्येष सरोरुहद्युतिमुषः पादांस्तवाऽऽसेवितुं
प्रीत्युत्कर्षकृतो दृशामुदयनस्येन्दोरिवोद्वीक्षते ॥

इति वैतालिकमुखेन चन्द्रतुल्यवत्सराजगुणवर्णनया सागरिकायाः समागमहेतुरनुरागबीजानुगुण्येनैव विलोभनाद् विलोभनमिति । यथा च वेणीसंहारे ।

मन्थायस्तार्णवाम्भःप्लुतकुहरचलन्मन्दरध्वानधीरः
कोणाघातेषु गर्जत्प्रलयघनघटान्योन्यसङ्घट्टचण्डः ।
कृष्णाक्रोधाग्रदूतः कुरुकुलनिधनोत्पातनिर्घातवातः
केनास्मत्सिंहनादप्रतिरसितसखो दुन्दुभिस्ताडितोऽयम् ॥

इत्यादिना यशोदुन्दुभिरित्यन्तेन द्रौपद्या विलोभनाद् विलोभनमिति ।

अथ युक्तिः ।

सम्प्रधारणमर्थानां युक्तिः

यथा रत्नावल्यां मयाऽपि चैतां देवीहस्ते सबहुमानं निक्षिपता युक्तमेवानुष्ठितं कथितं च मया यथा बाभ्रव्यः कञ्चुकी सिंहलेश्वरामात्येन वसुभूतिना सह कथं कथमपि समुद्रादुत्तीर्य कोशलोच्छित्तये गतस्य रुमण्वतो मिलित इत्यनेन सागरिकाया अन्तःपुरस्थाया वत्सराजस्य सुखेन दर्शनादि प्रयोजनावधारणाद् बाभ्रव्यसिंहलेश्वरामात्ययोः स्वनायकसमागमहेतु प्रयोजनत्वेनावधारणाद् युक्तिरिति ।

अथ प्राप्तिः ।

प्राप्तिः सुखागमः ।

इति । यथा वेणीसंहारे । चेटी । 'भट्टिणि परिकुविदो विअ कुमारो लक्खीअदि' इत्युपक्रमे । भीमः ।

मथ्नामि कौरवशतं समरे न कोपाद्
दुःशासनस्य रुधिरं न पिबाम्युरस्तः ।
संचूर्णयामि गदया न सुयोधनोरू
संधिं करोतु भवतां नृपतिः पणेन ॥

द्रौपदी श्रुत्वा सहर्षं 'णाध असुदपुव्वं क्खु एदं वअणं ता पुणो पुणो भण' इत्यनेन भीमक्रोधबीजान्वयेनैव सुखप्राप्त्या द्रौपद्याः प्राप्तिरिति । यथा च रत्नावल्यां सागरिका श्रुत्वा सहर्षं परिवृत्य सस्पृहं पश्यन्ती । 'कधं अअं सो राआ उदअणो जस्स अहं तादेण दिण्णा ता परप्पेसणदूसिदं मे जीविदं एदस्स दंसणेण बहुमदं संजादमिति । सागरिकायाः सुखागमात् प्राप्तिरिति ।

अथ समाधानम् ।

बीजागमः समाधानं

यथा रत्नावल्यां वासवदत्ता । 'तेण हि उवणेहि मे उवअरणाइं । सागरिका । भट्टिणि एदं सव्वं सज्जम् । वासवदत्ता । निरूप्यात्मगतं अहो पमादो परिअणस्स जस्स एव्व दंसणपहादो पअत्तेण रक्खीअदि तस्स ज्जेव दिट्ठिगोअरं पाविदा भोदु एव्वं दाव । प्रकाशं । हंजे सागरिए कीस

१ भर्तृदारिके परिकुपित इव कुमारो लक्ष्यते ।
२ नाथ अश्रुतपूर्वमिदं वचनं तत्पुनः पुनर्भण ।
३ कथमयं स राजा उदयनो यस्याहं तातेन दत्ता तत् परप्रेषणदूषितं मे जीवितम् एतस्य दर्शनेन बहुमतं सञ्जातम् ।
४ तेन हि मे उपकरणानि उपनय । सागरिका । भर्तृदारिके ! एतत् सर्वं सज्जम् । वासवदत्ता निरूप्यात्मगतम् अहो प्रमादः परिजनस्य यस्यैव दर्शनपथात् प्रयत्नेन रक्ष्यते तस्यैव कथं दृष्टिगोचरम् आगता भवेत् । एवं तावत् । प्रकाशम् । चेटि सागरिके कथं त्वमद्य पराधीने परिजने

सुखदुःखकारित्वाद् विधानमिति। यथा च वेणीसंहारे। द्रौपदी। [1]णाह पुणोवि तुम्हेहिं अहं आअच्छिअ समासासइदव्वा। भीमः।

ननु पाञ्चालराजतनये किमद्याप्यलीकाश्वासनया।
भूयः परिभवक्लान्तिलज्जाविधुरिताननम्।
अनिःशेषितकौरव्यं न पश्यसि वृकोदरम्॥

इति सम्भ्रमस्य सुखदुःखहेतुत्वाद् विधानमिति।

अथ परिभावना।

परिभावोऽद्भुतावेशः

इति। यथा रत्नावल्याम्। सागरिका। (दृष्ट्वा सविस्मयम्।) [2]कधं पच्चक्खो ज्जेव अणङ्गो पूअं पडिच्छेदि। अहं पि इह ट्ठिदा ज्जेव्व णं पूजइस्सं। इत्यनेन वत्सराजस्य अनङ्गरूपतया अपह्नुतावमनङ्गस्य च प्रत्यक्षस्य पूजाग्रहणस्य लोकोत्तरत्वादद्भुतरसावेशः परिभावना। यथा च वेणीसंहारे। द्रौपदी। [3]किं दाणिं एसो पलअजलधरत्थणिदमंसलो खणे खणे समरदुन्दुही ताडीअदि। इति लोकोत्तरसमरदुन्दुभिध्वनेर्विस्मयरसावेशाद् द्रौपद्याः परिभावना।

अथोद्भेदः।

उद्भेदो गूढभेदनम्।

इति। यथा रत्नावल्यां वत्सराजस्य कुसुमायुधव्यपदेशगूढस्य वैतालिक-वचसा अस्तापास्तेत्यादिनोद्भेदनमस्येत्यनेन बीजानुगुण्येनैवोद्भेदनादुद्भेदः। यथा च वेणीसंहारे। आर्य किमिदानीमध्यवस्यति गुरुरित्युपक्रमे। नेपथ्ये।

यत् सत्यव्रतभङ्गभीरुमनसा यत्नेन मन्दीकृतं
यद् विस्मर्तुमपीहितं शमवता शान्तिं कुलस्येच्छता।

१ नाथ पुनरपि त्वयाऽऽगत्य समाश्वासयितव्या।

२ कथं प्रत्यक्ष एवानङ्गः पूजां प्रतीच्छति। अहमपि इह स्थितैवैनं पूजयिष्यामीति।

३ किमिदानीमेष प्रलयजलधरस्तनितमांसलः क्षणे क्षणे समरदुन्दुभिस्ताड्यते।

तद् द्यूतारणिसम्भृतं नृपसुताकेशाम्बराकर्षणैः
क्रोधज्योतिरिदं महत् कुरुवने यौधिष्ठिरं जृम्भते ॥

भीम । सहर्षम् । जृम्भतां सम्प्रत्यप्रतिहतमार्यस्य क्रोधज्योतिः ।

अथ करणम् ।

करणं प्रकृतारम्भो

यथा रत्नावल्याम् । [1]णमो दे कुसुमाउह ता अमोहदंसणो मे भविस्सि त्ति दिट्ठं जं पेक्खिदव्वं ता जाव ण कोवि मं पेक्खदि ता गमिस्सं इत्यनेनानन्तरप्रकृतस्वनिर्विघ्नस्थानारम्भणात् करणम् । यथा च वेणीसंहारे । तत् पाञ्चालि गच्छामो वयमिदानीं कुरुकुलक्षयायेति । सहदेव । आर्य गच्छाम इदानीं गुरुजनानुज्ञाता विक्रमानुरूपमाचरितुमित्यनन्तरप्रस्तूयमानसङ्ग्रामारम्भणात् करणमिति । सर्वत्र चोद्देशप्रतिनिर्देशवैषम्यं क्रियाक्रमस्याविवक्षितत्वादिति ।

अथ भेदः ।

भेदः प्रोत्साहना मता ॥ २७ ॥

इति । यथा वेणीसंहारे । [2]णाह मा क्खु जण्णसेणीपरिभवुद्दीविदकोवा अणवेक्खिदसरीरा परिक्कमिस्सध जदो अप्पमत्तसञ्चरणीआइं सुणीअन्ति रिउबलाइं । भीमः । अयि सुक्षत्रिये ।

अन्योन्यास्फालभिन्नद्विपरुधिरवसामांसमस्तिष्कपङ्के
मग्नानां स्यन्दनानामुपरिकृतपदन्यासविक्रान्तपत्तौ ।
स्फीतासृक्पानगोष्ठीरसदशिवशिवातूर्यनृत्यत्कबन्धे
सङ्ग्रामैकार्णवान्तःपयसि विचरितुं पण्डिताः पाण्डुपुत्राः ॥

इत्यनेन विषण्णाया द्रौपद्याः शोकोत्साहवीर्यानुगुण्येनैव प्रोत्साहनाद् भेद इति ।

---

१ नमस्ते कुसुमायुध तदमोघदर्शनो मे भविष्यसीति दृष्टं यत् प्रेक्षितव्यं तत् यावन्न कोऽपि मां प्रेक्षते तत् गमिष्यामीति ।

२ नाथ मा खलु याज्ञसेनीपरिभवोद्दीपितकोपा अनपेक्षितशरीराः परिक्रमिष्यथ यतोऽप्रमत्तसञ्चरणीयानि श्रूयन्ते रिपुबलानि ।

एतानि च द्वादशमुखाङ्गानि बीजारम्भद्योतकानि साक्षात् पारम्पर्येण वा विधेयानि। एतेषामुपक्षेपपरिकरपरिन्यासयुक्त्युद्भेदसमाधानानामवश्यं भावितेति।

अथ साङ्गं प्रतिमुखसन्धिमाह।

लक्ष्यालक्ष्य     क्रमोद्भेद ॥ २८ ॥

तस्य बीजस्य किञ्चिल्लक्ष्यः किञ्चिदलक्ष्य इवोद्भेदः प्रकाशनं तत् प्रतिमुखम्। यथा रत्नावल्यां द्वितीयेऽङ्के वत्सराजसागरिकासमागमहेतोरनुरागबीजस्य प्रथमाङ्कोपक्षिप्तस्य सुसङ्गताविदूषकाभ्यां ज्ञायमानतया किञ्चिल्लक्ष्यस्य वासवदत्तया च चित्रफलकवृत्तान्तेन किञ्चिदुन्नीयमानस्य दृश्यादृश्यरूपतयोद्भेदः प्रतिमुखसन्धिरिति। वेणीसंहारेऽपि द्वितीयेऽङ्के भीष्मादिवधेन किञ्चिल्लक्ष्यस्य कर्णादिवधात् चालक्ष्यस्य क्रोधबीजस्योद्भेदः।

सहभृत्यगणं सबान्धवं सहमित्रं ससुतं सहानुजम्।
स्वबलेन निहन्ति संयुगे न चिरात् पाण्डुसुतः सुयोधनम्॥

इत्यादिभिः।

दुःशासनस्य     हृदयक्षतजाम्बुपाने
दुर्योधनस्य च यथा गदयोरुभङ्गे।
तेजस्विनां समरमूर्धनि पाण्डवानां
ज्ञेया जयद्रथवधेऽपि तथा प्रतिज्ञा॥

इत्येवमादिभिरुद्भेदः प्रतिमुखसन्धिरिति। अस्य च पूर्वाङ्कोपक्षिप्त बिन्दुरूपबीजप्रयत्नार्थानुगतानि त्रयोदशाङ्गानि भवन्ति।

तान्याह।

विलासः     पर्युपासनम् ॥२९॥

वज्रं पुष्पमुपन्यासो वर्णसंहार इत्यपि।

यथोद्देशं लक्षणमाह।

रत्यर्थेहा     सः ॥३०॥

परिहासवचो     निरोधनम् ॥३१॥

[1]दुल्लहजणाणुराओ लज्जा गरुई परव्वसो अप्पा ।
पिअसहि विसमं पेम्मं मरणं सरणं णवर एक्कं ॥

इत्यनेन सागरिकाया बीजान्वयेन प्रीत्युपचारविधूननात् विधूतम् । यथा च वेणीसंहारे भानुमत्या दुःस्वप्नदर्शनेन दुर्योधनस्याऽनिष्टशङ्कया पाण्डवविजयशङ्कया वा रत्यविधूननमिति ।

अथ शम । तच्छम इति । तस्या अरतेरुपशम शमः । यथा रत्नावल्याम् । राजा । वयस्याऽनया लिखितोऽहमिति यत् सत्यमात्मन्यपि मे बहुमानस्तद् कथं न पश्यामीति प्रक्रमे । सागरिका । आत्मगतम् । [2]हिअअ समस्सस मणोरहो वि दे एत्तिअं भूमिं ण गदो इति किंचिदरत्युपशमात् शम इति ।

अथ नर्म । परिहासवचश्च इति । यथा रत्नावल्याम् । सुसंगता । [3]सहि जस्स कए तुमं आअदा सो अअं पुरदो चिट्ठदि । सागरिका । साभ्यसूयम् सुसङ्गदे कस्स कए अहं आअदा । सुसङ्गता । अइ अप्पसङ्किदे णं चित्तफलअस्स गेण्ह एवमित्यनेन बीजान्वितं परिहासवचनं नर्म । यथा च वेणीसंहारे दुर्योधनः । चेटीहस्तादर्घ्यपात्रमादाय देव्याः समर्पयति । पुनर्भानुमती अर्घ्यं दत्त्वा । [4]हला उवणेहि मे कुसुमाइं जाव अवराणं पि देवाणं सवरिअं णिवत्तेमि हस्तौ प्रसारयति । दुर्योधनः । पुष्पाण्युपनयति । भानुमत्याश्चास्पर्शजातकम्पाया हस्तात् पुष्पाणि पतन्तीत्यनेन नर्मणा दुःस्वप्नदर्शनोपशमाय देवतापूजाविघ्नकारिणा बीजोद्घाटनात् परिहास्य

१ दुर्लभजनानुरागो लज्जा गुर्वी परवश आत्मा ।
प्रियसखि विषमं प्रेम मरणं शरणं केवलमेकम् ।

२ हृदय समाश्वसिहि मनोरथोऽपि ते एतावतीं भूमिं न गत इति ।

३ सखि यस्य कृते त्वमागता सोऽयं पुरतस्तिष्ठति । सागरिका साभ्यसूयं सुसङ्गते कस्य कृतेऽहमागता ? अयि आत्मशङ्किते ननु चित्रफलकस्य तद्गृहाणेति ।

४ हला उपनय मे कुसुमानि यावदपरेषामपि देवानां सपर्यां निर्वर्तयामि ।

प्रसीदेति ब्रूयामिदमसति कोपे न घटते
करिष्याम्येवं नो पुनरिति भवेदभ्युपगमः ।
न मे दोषोऽस्तीति त्वमिदमपि हि ज्ञास्यसि मृषा
किमेतस्मिन् वक्तुं क्षममिति न वेद्मि प्रियतमे ॥

इत्यनेन भिन्नतयार्लापिकयोर्दर्शनात् कुपितायां वासवदत्तायामनुनयनं नायक-गतानुरागोद्घाटनक्रमेण पर्युपासनमिति ।

अथ पुष्पम् । पुष्पमिति । यथा रत्नावल्याम् । राजा । सागरिकां हस्ते गृहीत्वा स्पर्शं नाटयति । विदूषकः । [1]भो एसा अपुव्वा सिरी तए समासादिदा । राजा । वयस्य ! सत्यम् ।

श्रीरेषा पाणिरप्यस्याः पारिजातस्य पल्लवः ।
कुतोऽन्यथा स्रवत्येष स्वेदच्छद्मामृतद्रवः ॥

इत्यनेन नायकयोः साक्षादन्योन्यदर्शनादिना सविशेषानुरागोद्घाटनात् पुष्पम् ।

अथोपन्यासः । उपन्यास इति । यथा रत्नावल्याम् । सुसंगता । [2]भट्टा अलं सङ्काए मए वि भट्टिणो पसाएण कीलिदं एव्व ता किं कण्णाभरणकेण अदो वि मे गरुओ पसाओ जं कीस तए अहं एत्थ आलिहिदे त्ति कुविआ मे पिअसही सागरिआ ता पसादीअदु इत्यनेन सुसंगतावचसा सागरिका मया लिखिता सागरिकया च त्वमिति सूचयता प्रसादोपन्यासेन बीजोद्भेदानुपन्यास इति ।

अथ वज्रम् । वज्रमिति । यथा रत्नावल्याम् । वासवदत्ता । फलकं निर्दिश्य । [3]अज्जउत्त एसा वि जा तुह समीवे एदं किं वसन्तअस्स विण्णाणं ।

---

१ भो एषा अपूर्वा श्रीः त्वया समासादिता ।

२ भर्तः अलं शङ्कया मयापि भर्तुः प्रसादेन क्रीडितमेव तत् किं कर्णाभरणेन । अतोऽपि मे गुरुः प्रसादः यत् कस्मात्त्वयाहमत्रालिखितेति कुपिता मे प्रियसखी सागरिका तत् प्रसाद्यताम् ।

३ आर्यपुत्र एषापि या तव समीपे । एतत् किं वसन्तकस्य विज्ञानम् ।
आर्यपुत्र ममापि एतत् चित्रकर्म पश्यन्त्याः शीर्षवेदना समुत्पन्ना ।

पुनः प्रस्तुत समाधि एवं चित्रकर्म पेक्षणीयं सीसवेषणासमुपपन्ना इत्यनेन वासवदत्तया वत्सराजस्य सागरिकानुरागोऽनुमानात् प्रत्यक्षनिष्ठुरं विधानं वज्रमिति।

अथ वर्णसंहारः। चातुर्वर्ण्येति। यथा वीरचरिते तृतीयेऽङ्के।

परिषदियमृषीणामेष वृद्धो युधाजित्
सह नृपतिरमात्यैर्लोमपादश्च वृद्धः।
अयमविरतयज्ञो ब्रह्मवादी पुराणः
प्रभुरपि जनकानामद्रुहो याचकस्ते॥

इत्यनेन ऋषिक्षत्रियामात्यादीनां सङ्गतानां वर्णानां वचसा रामविजया-शंसिना परशुरामगुरुपस्थापोहमाम्नाहारेणोन्मूलनात् वर्णसंहार इति।

एतानि च त्रयोदश प्रतिमुखाङ्गानि मुखसन्ध्युपक्षिप्त बिन्दुलक्षणा-वान्तरबीजमहाबीजप्रयत्नानुगतानि विधेयानि। एतेषां च मध्ये परिसर्पप्रशमवज्रोपन्यासपुष्पाणां प्राधान्यम्। इतरेषां यथासम्भवं प्रयोग इति।

अथ गर्भसन्धिमाह।

गर्भस्तु ... प्राप्तिसम्भवः ॥३६॥

प्रतिमुखसन्धौ लक्ष्यालक्ष्यरूपतया स्तोकोद्भिन्नस्य बीजस्य सविशेषोद्भेदपूर्वकः सान्तरायो लाभः पुनर्विच्छेदः पुनः प्राप्तिः पुनर्विच्छेदः पुनरपि तस्यैवान्वेषणं वारंवारं सोऽनिर्धारितैकान्तफलप्राप्त्याशात्मको गर्भसन्धिरिति। तत्र औत्सर्गिकत्वेन प्राप्तायाः पताकाया अनियमं दर्शयति। पताका स्यान्न वेत्यनेन। प्राप्तिसम्भवस्तु स्यादेवेति दर्शयति। स्यादिति। यथा रत्नावल्यां तृतीयेऽङ्के वत्सराजस्य वासवदत्तालक्षणो-पायेन तद्वेषपरिग्रहणार्थिकाभिसरणोपायेन च विदूषकवचसा सागरिका-प्राप्त्याशा प्रथमं पुनर्वासवदत्तयाविच्छेदः पुनः प्राप्तिः पुनर्विच्छेदः पुनरपि अनिवारणोपायाभावेन नास्त्येव देवीप्रसादनं मुक्त्वान्य उपाय इत्यनेन दर्शितमिति। स च द्वादशाङ्गो भवति।

तान्दर्शयति।

अभूताहरणं छद्म ॥१४॥

उद्घातसम्भ्रमाद्येषां लक्षणं च प्रतीयते ।

इति । यथोद्देशं लक्षणमाह ।

अभूताहरणं छद्म

इति । यथा रत्नावल्याम् । '[1]साहु रे अमच्च वसन्तअ साहु । अदि सइदो तए अमच्चो जोगंधराअणो इमाए सन्धिविग्गहचिन्ताए इत्यादिना प्रवेशकेन गृहीतवासवदत्तावेषाया सागरिकाया वत्सराजाभिसरणे छद्म विदूषकसुसङ्गताकमुकाञ्चनमालानुवादद्वारेण दर्शितमित्युदाहरणम् ।

अथ मार्गः ।

मार्गस्तत्त्वार्थकीर्तनम् ॥१५॥

इति । यथा रत्नावल्याम् । विदूषकः । [2]दिट्ठिआ वड्ढसि समीहिदब्भहिआए कज्जसिद्धीए । राजा । वयस्य कुशलं प्रियायाः । विदूषकः । [3]अइरेण सअं ज्जेव्व पेक्खिअ जाणिहिसि । राजा । दर्शनमपि भविष्यति । विदूषकः । सगर्वम् । [4]कीस ण भविस्सदि जस्स दे उवहसिदविहप्फदिबुद्धिविहवो अहं अमच्चो । राजा । तथापि कथमिति श्रोतुमिच्छामि । विदूषकः । कर्णे कथयत्येवमित्यनेन यथा विदूषकेण सागरिकासमागमः सूचितः तथैव निश्चितरूपो राज्ञे निवेदित इति तत्त्वार्थकथनान्मार्ग इति ।

अथ रूपम् ।

रूपं वितर्कवद्वाक्यम्

इति । यथा रत्नावल्याम् । राजा अहो किमपि कामिजनस्य स्वगृहिणीसमागमपरिभाविनोऽभिनवं जनं प्रति पक्षपातः । तथाहि ।

१ साधु रे अमात्य वसन्तक । साधु । अतिशयितस्त्वयामात्यो यौगन्धरायणोऽनया सन्धिविग्रहचिन्तया ।

२ दिष्ट्या वर्धसे समीहिताभ्यधिकया कार्यसिद्ध्या ।

३ अचिरेण स्वयमेव प्रेक्ष्य ज्ञास्यसि ।

४ कथं न भविष्यति यस्य ते उपहसितबृहस्पतिबुद्धिविभवोऽहममात्यः ।

भावज्ञानमथापरे ॥३१॥

इति । यथा रत्नावल्याम् । राजा । उपसृत्य । प्रिये सागरिके ॥

शीतांशुर्मुखमुत्पले तव दृशौ पद्मानुकारौ करौ
रम्भास्तम्भनिभं तथोरुयुगलं बाहू मृणालोपमौ ।
इत्याह्लादकराखिलाङ्गि रभसान्निःशङ्कमालिङ्ग्य माम् ।
अङ्गानि त्वमनङ्गतापविधुराण्येह्येहि निर्वापय ॥

इत्यादिना इह तदन्यस्यैव विस्मापक इत्यन्येन वासवदत्तया तत्त्वराज भावस्य ज्ञातत्वात् क्रमान्तरमिति ।

अथ संग्रहः ।

संग्रहः सामदानोक्तिर्

इति । यथा रत्नावल्याम् । साधु वयस्य साधु इदं ते पारितोषिकं कटकं ददामीत्याभ्यां सामदानाभ्यां विदूषकस्य सागरिकासमागमकारिणः संग्रहात् संग्रह इति ।

अथानुमानम् ।

अभ्यूहो लिङ्गतोऽनुमा ।

यथा रत्नावल्याम् । राजा । धिङ् मूर्ख ! त्वत्कृत एवायमापतितोऽस्माकमनर्थः । कुतः ।

समारूढा प्रीतिः प्रणयबहुमानात् प्रतिदिनं
व्यलीकं वीक्ष्येदं कृतमकृतपूर्वं खलु मया ।
प्रिया मुञ्चत्यद्य स्फुटमसहना जीवितमसौ
प्रकृष्टस्य प्रेम्णः स्खलितमविषह्यं हि भवति ॥

विदूषकः । भो[1] वअस्स वासवदत्ता किं करिस्सदि त्ति ण आणामि । सागरिआ उण दुक्करं जीविस्सदि त्ति तक्केमि इत्यत्र प्रकृष्टप्रेमस्खलनेन सागरिकानुगमनेन वासवदत्ताया मरणाभ्यूहनमनुमानमिति ।

अथाधिबलम् ।

---

१ भो वयस्य वासवदत्ता किं करिष्यतीति न जानामि । सागरिका पुनर्दुष्करं जीविष्यतीति तर्कयामि ।

प्रविष्टसमभिसन्धिः

इति । यथा रत्नावल्याम् । काञ्चनमाला । [1]भट्टिणि इयं सा चित्तसालिआ ता वसन्तअस्स सण्णं करेमि छोटिकां ददाति इत्यादिना वासवदत्ताकाञ्चनमालाभ्यां सागरिकासुसङ्गतावेषाभ्यां राजविदूषकयोरभिसन्धीयमानत्वाच्छलनमिति ।

अथ तोटकम् ।

संरब्धं तोटकं वचः ॥३७॥

इति । यथा रत्नावल्याम् । वासवदत्ता । उपसृत्य । [2]अज्जउत्त जुत्तमिणं सरिसमिणं । पुन सरोषम् । [3]अज्जउत्त उट्ठेहि किं अज्ज वि आहिजाईए सेवादुक्खमणुभवीअदि कञ्चणमाले एदेण ज्जेव पासेण बन्धिअ आणेहि एदं दुट्ठबम्हणम् । एदं पि दुट्ठकण्णअं अग्गदो करेहि इत्यनेन वासवदत्ता संरब्धवचसा सागरिकासमागमान्तरायभूतेनाऽभिमतप्राप्तिकारणं तोटकमुक्तम् । यथा च वेणीसंहारे ।

प्रयत्नपरिबोधितः स्तुतिभिरद्य शेषे निशाम् ।

इत्यादिना ।

कृतायुधो यावदहं तावदन्यैः किमायुधैः ।

इत्यन्तेनाश्वत्थामकर्णयोरन्योन्यं संरब्धवचसा सेनाभेदकारिणा पाण्डवविजयप्राप्त्याशान्वितं तोटकमिति । पाठान्तरे तु ।

तोटकस्यान्यथाभावं ब्रुवतेऽधिबलं बुधाः ।

यथा रत्नावल्याम् । राजा । देवि एवमपि प्रत्यक्षदृष्टव्यलीकः किं विज्ञापयामि ।

---

१ हे भर्तृदारिके इयं चित्रशालिका तद् वसन्तकस्य संज्ञां करोमि ।

२ आर्यपुत्र युक्तमिदं सदृशमिदम् ।

३ आर्यपुत्रोत्तिष्ठ किमद्यापि आभिजात्या सेवादुःखमनुभूयते । काञ्चनमाले एतेनैव पाशेन बद्ध्वानयैनं दुष्टब्राह्मणम् । एतामपि दुष्टकन्यकामग्रतः कुरु ।

यथा रत्नावल्याम् । विदूषकः । पश्यन् । ¹का उण एसा । ससम्भ्रमम् । कथं देवी वासवदत्ता अत्ताणं वावादेदि । राजा । ससम्भ्रममुपसर्पन् । क्वासौ क्वासावित्यनेन वासवदत्तानुकृतिगृहीतायाः सागरिकाया मरणशङ्कया सम्भ्रम इति । यथा च वेणीसंहारे । नेपथ्ये कलकलः । अश्वत्थामा । ससम्भ्रमम् । मातुल ! मातुल ! कष्टम् एष भ्रातुः प्रतिज्ञाभङ्गभीरुः किरीटी समं शरवर्षैर्दुर्योधनराधेयावभिद्रवति । सर्वथा पीतं शोणितं दुःशासनस्य भीमेनेत्याशङ्का । तथा प्रविश्य सम्भ्रान्तः सप्रहारः सूतः । त्रायतां त्रायतां कुमार इति नाम । इत्येताभ्यामाशङ्काभ्यां तु दुःशासनदुर्योधनवधसूचकाभ्यां पाण्डवविजयप्राप्त्यानुगमित सम्भ्रम इति ।

अथाऽऽक्षेपः ।

गर्भबीजसमुद्भेदादाक्षेपः परिकीर्तितः ॥३८॥

यथा रत्नावल्याम् । राजा । वयस्य देवीप्रसादनं मुक्त्वा नान्यमत्रोपायं पश्यामि । पुनः प्रस्तावान्तरे सर्वथा देवीप्रसादनं प्रति निष्प्रत्याशीभूताः स्मः । पुनस्तत् किमिह स्थितेन देवीमेव गत्वा प्रसादयामीत्यनेन देवीप्रसादायत्ता सागरिकासमागमसिद्धिरिति गर्भबीजोद्भेदादाक्षेपः । यथा च वेणीसंहारे । सुन्दरकः । ²अहवा किमेत्थ देव्वं उवालहामि तस्स क्खु एदं णिब्भच्छिदविदुरवअणबीअस्स परिभूदपिदामहहिदोवदेसङ्कुरस्स सउणिप्पोच्छाहणारूढमूलस्स कूडविससाहिणो पञ्चालीकेसग्गहणकुसुमस्स फलं परिणमदि । इत्यनेन बीजमेव फलोन्मुखतयाऽऽक्षिप्यत इत्याक्षेपः ।

एतानि द्वादश गर्भाङ्गानि प्राप्त्याशाप्रदर्शकत्वेनोपनिबन्धनीयान्येषां च मध्ये अभूताहरणमार्गतोटकाधिबलाक्षेपाणां प्राधान्यम् । इतरेषां यथासम्भवं प्रयोग इति साङ्गो गर्भसन्धिरुक्तः ।

अथाऽवमर्शः ।

---

१ का पुनरेषा । कथं देवी वासवदत्तात्मानं व्यापादयति ।

२ अथवा किमत्र दैवमुपालभामि तस्य खल्वेतन्निर्भर्त्सितविदुरवचनबीजस्य परिभूतपितामहहितोपदेशाङ्कुरस्य शकुनिप्रोत्साहनारूढमूलस्य कूटविषशाखिनः पाञ्चालीकेशग्रहणकुसुमस्य फलं परिणमति ।

क्रोधेनावमृशेद्      सोऽवमर्शोऽङ्गसंग्रहः ॥४९॥

अवमर्शनमवमर्शः पर्यालोचनम्। तच्च क्रोधेन वा व्यसनाद् वा विलोभनेन वा भवितव्यमनेनार्थेनेत्यवधारितैकान्तफलप्राप्त्यवसायात्मा गर्भनिर्भिन्नबीजार्थसम्बन्धो विमर्शोऽवमर्श। यथा रत्नावल्यां चतुर्थेऽङ्के। अग्निविद्रवपर्यन्तो वासवदत्ताप्रत्ययापायरत्नावली-प्राप्त्यवसायात्मा विमर्शो दर्शितः। यथा च वेणीसंहारे। दुर्योधन-रुधिराक्तभीमसेनागमपर्यन्तः।

तीर्णे भीष्ममहोदधौ कथमपि द्रोणानले निर्वृते
कर्णाशीविषभोगिनि प्रशमिते शल्येऽपि याते दिवम्।
भीमेन प्रियसाहसेन रभसात्स्वल्पावशेषे जये
सर्वे जीवितसंशयं वयममी वाचा समारोपिताः॥

इत्यत्र स्वल्पावशेषे जय इत्यादिभिर्विजयप्रत्याशासमस्तभीष्मादिमहारथवधादवधारितैकान्तविजयावमर्शनादवमर्शनं दर्शितमित्यवमर्शसन्धिः।

तस्याङ्गसंग्रहमाह।

तत्रा०      अपवादः ॥५०॥

यथोद्देशं लक्षणमाह।

दोषप्रख्यापवादः स्यात्

यथा रत्नावल्याम्। सुसंगता। '[1]सा खु तवस्सिणी भट्टिणीए उज्जइणिं णीअदि त्ति पवादं करिअ उवत्थिदे अद्धरत्ते ण आणीअदि कहिंपि ण जाणीअदि त्ति। विदूषकः। सोहणम्! '[2]अदिणिग्घिणं क्खु किदं देवीए। पुनः। भो वअस्स मा खु अण्णहा सम्भावेहि। सा खु देवीए उज्जइणीए पेसिदा। अदो अप्पिअं त्ति कहिदं। राजा। अहो निरनुरोधा

१ सा खलु तपस्विनी भट्टारिकया उज्जयिनीं नीयत इति प्रवादं कृत्वा उपस्थितेऽर्धरात्रे नानीयते कुत्रापि नीयेति।

२ अतिनिर्घृणं खलु कृतं देव्या। भो वयस्य मा खलु अन्यथा सम्भावय। सा खलु देव्या उज्जयिन्यां प्रेषिता। अतोऽप्रियमिति कथितम्।

कुर्वन् क्रीडामहीध्रं सजलजलधरश्यामलं धूमपातै-
रेष प्लोषार्तयोषिज्जन इह सहसैवोत्थितोऽन्तःपुरेऽग्निः ॥

इत्यादि । पुनर्वासवदत्ता । [1]अज्जउत्त ण क्खु अहं अत्तणो कारणादो भणामि । एसा मए णिग्घिणहिअआए संजदा सागरिआ विवज्जदि इत्यनेन सागरिकावधबन्धाग्निनिमित्तम् इति ।

अथ द्रवः ।

द्रवो गुरुतिरस्कृतिः ॥४१॥

इति । यथोत्तररामचरिते ।

वृद्धास्ते न विचारणीयचरितास्तिष्ठन्तु हुं वर्तते
सुन्दस्त्रीदमनेऽप्यखण्डयशसो लोके महान्तो हि ते ।
यानि त्रीण्यकुतोमुखान्यपि पदान्यासन् खरायोधने
यद् वा कौशलमिन्द्रसूनुदमने तत्राप्यभिज्ञो जनः ॥

इत्यनेन लवो रामस्य गुरोस्तिरस्कारं कृतवानिति द्रवः । यथा च वेणीसंहारे । युधिष्ठिरः । भगवन् कृष्णाग्रज सुभद्राभ्रातः ।

ज्ञातिप्रीतिर्मनसि न कृता क्षत्रियाणां न धर्मो
रूढं सख्यं तदपि गणितं नानुजस्यार्जुनेन ।
तुल्यः कामं भवतु भवतः शिष्ययोः स्नेहबन्धः
कोऽयं पन्था यदसि विमुखो मन्दभाग्ये मयीत्थम् ।

इत्यादिना बलभद्रं गुरुं युधिष्ठिरस्तिरस्कृतवानिति द्रवः ।

अथ शक्तिः ।

विरोधशमनं शक्तिः

इति । यथा रत्नावल्याम् । राजा ।

सव्याजैः शपथैः प्रियेण वचसा चित्तानुवृत्त्याधिकं
वैलक्ष्येण परेण पादपतनैर्वाक्यैः सखीनां मुहुः ।

---

१ आर्यपुत्र न खलु अहमात्मनः कारणाद् भणामि । एषा मया निर्घृण-हृदयया संयता सागरिका विपद्यते ।

प्रत्यापत्तिमुपागता न हि तथा देवो रुदत्या यथा
प्रक्षाल्येव तदैव बाष्पसलिलैः कोपोऽपनीतः स्वयम् ॥

इत्यनेन सागरिकासमागमविरोधिवासवदत्ताकोपोपशमनात् शक्तिः। यथा चोत्तररामचरिते। राम आह।

विरोधो विश्रान्तः प्रसरति रसो निर्वृतिघनम्
तदौद्धत्यं क्वापि व्रजति विनयः प्रह्वयति माम्।
झटित्यस्मिन् दृष्टे किमपि परवानस्मि यदि वा
महार्घस्तीर्थानामिव हि महतां कोऽप्यतिशयः ॥

अथ द्युतिः।

तर्जनोद्वेजने द्युतिः।

यथा वेणीसंहारे। एतच्च वचनमुपश्रुत्य रामानुजस्य सकलमिनिकुञ्ज पूरिताघातिरिक्तमुद्भ्रान्तसलिलचरशतसङ्कुलं त्रासोद्वृत्तनक्रग्राहमालोड्य सरः सलिलं भैरवं च गर्जित्वा कुमारवृकोदरेणाभिहितम्।

जन्मेन्दोरमले कुले व्यपदिशस्यद्यापि धत्से गदां
मां दुःशासनकोष्णशोणितसुराक्षीबं रिपुं भाषसे।
दर्पान्धो मधुकैटभद्विषि हरावप्युद्धतं चेष्टसे
मत्त्रासान्नृपशो विहाय समरं पङ्केऽधुना लीयसे ॥

इत्यादिना त्यक्तोत्थित सपक्षसमिरपनम पूर्वजन्मसमोद्भावनया दुर्योधन तर्जनोद्वेजनकारिभ्यां पाण्डवविजयानुकूलदुर्योधनोत्थापनहेतुभ्यां भीमस्य द्युतिरुक्ता।

अथ प्रसंगः।

गुरुकीर्तनं प्रसङ्गः

इति। यथा रत्नावल्याम्। देव याऽसौ सिंहलेश्वरेण स्वदुहिता रत्नावली नामायुष्मती वासवदत्तां दग्धामुपश्रुत्य देवाय पूर्वप्रार्थिता सती प्रतिदत्तेत्यनेन रत्नावल्या नामाभिजनप्रकाशनेन प्रसंगाद् गुरुकीर्तनेन प्रसंगः। तथा मृच्छकटिकायाम्। चाण्डालः। 'एष सागरदत्तस्य सुतो

१ एष सागरदत्तस्य सुत आर्यविनयदत्तस्य नप्ता चारुदत्तो व्यापा

इत्यनेनैकवाक्यतया भिन्नाभिप्रायप्रयोगोपन्यासेन वत्सराजस्य हृदयस्थ सागरिकासमागमानुकूला स्वमतिस्तमाविष्कृतवान् ।

यथा च वेणीसंहारे ।

> नूनं तेनाद्य वीरेण प्रतिज्ञाभङ्गभीरुणा
> बध्यते केशपाशस्ते स चास्याकर्षणे क्षमः ॥

इत्यनेन युधिष्ठिरः स्वगतमर्थमाविष्करोति ।

अथ विरोधनम् ।

संरब्धानां विरोधनम् ।

इति । यथा वेणीसंहारे । राजा । रे रे मरुत्तनय किमेवं वृद्धस्य राज्ञः पुरतो निन्दितमात्मकर्म श्लाघसे । अपि च ।

> कृष्टा केशेषु भार्या तव तव च पशोस्तस्य राज्ञस्तयोर्वा
> प्रत्यक्षं भूपतीनां मम भुवनपतेराज्ञया द्यूतदासी ।
> अस्मिन् वैरानुबन्धे वद किमपकृतं तैर्हता ये नरेन्द्रा
> बाह्वोर्वीर्यातिभारद्रविणगुरुमदं मामजित्वैव दर्पः ॥

भीमः भीम मा रुषः । अर्जुनः । आर्य प्रसीद किमत्र कोपेन ।

> अप्रियाणि करोत्येष वाचा शक्तो न कर्मणा ।
> हतभ्रातृशतो दुःखी प्रलापैरस्य का व्यथा ॥

भीमः । अरे भरतकुलकलङ्क ।

> अद्यैव किं न विसृजेयमहं भवन्तं
> दुःशासनानुगमनाय कटुप्रलापिन् ।
> विघ्नं गुरू न कुरुतो यदि मत्कराग्र
> निर्भिद्यमानरणितास्थनि ते शरीरे ॥

अन्यच्च मूढ ।

> शोकं स्त्रीवन्नयनसलिलैर्यत्परित्याजितोऽसि
> भ्रातुर्वक्षःस्थलविघटने यच्च साक्षीकृतोऽसि ।
> आसीदेतत् तव कुनृपतेः कारणं जीवितस्य
> क्रुद्धे युष्मत्कुलकमलिनीकुञ्जरे भीमसेने ॥

राजा । दुरात्मन् भरतकुलापसद पाण्डवपशो नाहं भवानिव विकत्थनाप्रगल्भः । किन्तु ।

द्रक्ष्यन्ति न चिरात् सुप्तं बान्धवास्त्वां रणाङ्गणे ।
मद्गदाभिन्नवक्षोऽस्थिवेणिकाभङ्गभीषणम् ॥

इत्यादिना संरब्धयोर्भीमदुर्योधनयोः स्वशक्त्युक्तिर्विरोधनमिति ।

अथ प्ररोचना ।

सिद्धामन्त्रणतो भाविदर्शिका स्यात् प्ररोचना ।

यथा वेणीसंहारे । पाञ्चालकः । अहं च देवेन चक्रपाणिनाभ्युपगम्य पूर्वं सन्दिष्टः ।

पूर्यन्तां सलिलेन रत्नकलशा राज्याभिषेकाय ते
कृष्णात्यन्तचिरोज्झिते च कबरीबन्धे करोतु क्षणम् ।
रामे शातकुठारभासुरकरे क्षत्रद्रुमोच्छेदिनि
क्रोधान्धे च वृकोदरे परिपतत्याजौ कुतः संशयः ॥

इत्यादिना मङ्गलानि कर्तुमाज्ञापयति । देवो युधिष्ठिर इत्यन्तेन द्रौपदीकेशसंयमनयुधिष्ठिरराज्याभिषेकयोर्भाविनोरपि सिद्धत्वेन दर्शिका प्ररोचनेति ।

अथ विचलनम् ।

विकत्थना विचलनम्

यथा वेणीसंहारे । भीमः । तात अम्ब ।

सकलरिपुजयाशा यत्र बद्धा सुतैस्ते
तृणमिव परिभूतो यस्य गर्वेण लोकः ।
रणशिरसि निहन्ता तस्य राधासुतस्य
प्रणमति पितरौ वां मध्यमः पाण्डवोऽयम् ॥

अपि च । तात ।

चूर्णिताशेषकौरव्यः क्षीबो दुःशासनासृजा ।
भङ्क्ता सुयोधनस्योर्वोर्भीमोऽयं शिरसाञ्चति ॥

इत्यनेन विनयवाक्यानुगतस्वगुणाविष्करणाद् विचलनमिति । यथा च रत्नावल्याम् । यौगन्धरायणः ।

देव्या मद्वचनाद् यथाऽभ्युपगतः पत्युर्वियोगस्तदा
सा देवस्य कलत्रसंघटनया दुःखं मया स्थापिता ।
तस्याः प्रीतिमयं करिष्यति जगत्स्वामित्वलाभः प्रभोः
सत्यं दर्शयितुं तथापि वदनं शक्नोमि नो लज्जया ॥

इत्यनेनाऽन्यपरेणापि यौगन्धरायणेन मया जगत्स्वामित्वानुबन्धी कन्यालाभो वत्सराजस्य कृत इति स्वगुणानुकीर्तनाद् विचलनमिति ।

अथाऽऽदानम् ।

आदानं कार्यसंग्रहः ॥४७॥

इति । यथा वेणीसंहारे । भीमः । ननु भो समन्तपञ्चकसञ्चारिणः ।

रक्षो नाहं न भूतं रिपुरुधिरजलाप्लाविताङ्गः प्रकामं
निस्तीर्णोरुप्रतिज्ञाजलनिधिगहनः क्रोधनः क्षत्रियोऽस्मि ।
भो भो राजन्यवीराः समरशिखिशिखादग्धशेषाः कृतं वस्
त्रासेनानेन लीनैर्हतकरितुरगान्तर्हितैरास्यते यत् ॥

इत्यनेन समस्तरिपुवधकार्यस्य संगृहीतत्वादादानम् । यथा च रत्नावल्याम् । सागरिका । दिशोऽवलोक्य । [1]दिट्ठिआ समन्तादो पज्जलिदो भअवं हुअवहो अज्ज करिस्सदि दुक्खावसाणम् इत्यनेनाऽन्यपरेणापि दुःखावसानकार्यस्य संग्रहादादानम् । यथा च जगत्स्वामित्वलाभः प्रभोरिति दर्शितमेवमित्येतानि यथासम्भवमवमर्शाङ्गानि । एतेषामपवादशक्तिव्यवसाय प्ररोचनादादानानि प्रधानानीति ।

अथ निर्वहणमाह ।

बीजवन्तो तत् ॥४८॥

यथा वेणीसंहारे । कञ्चुकी । उपसृत्य सहर्षम् । महाराज वर्धसे वर्धसे । अयं खलु कुमारभीमसेनः सुयोधनक्षतजारुणीकृतसकलशरीरो दुर्लक्ष्यव्यक्तिरित्यादिना द्रौपदीकेशसंयमनादिमुखसन्ध्यादिबीजानां निज निजस्थानोपक्षिप्तानामेकार्थतया योजनम् । यथा च रत्नावल्यां सागरिका ।

1 दिष्ट्या समन्तात् प्रज्वलितो भगवान् हुतवहोऽद्य करिष्यति दुःखा-वसानम् ।

रत्नावलीवसुभूतिबाभ्रव्यादीनामर्थानां मुखसन्ध्यादिषु प्रकीर्णानां वत्सराजैककार्यार्थत्वम्। वसुभूतिः। सागरिकां निर्वर्ण्यापवार्य। बाभ्रव्य सुसदृशीयं राजपुत्र्या इत्यादिना दर्शितमिति निर्वहणसन्धिः।

अथ तदङ्गानि।

सन्धिर्विबोधो        चतुर्दश ॥४१॥

यथोद्देशं लक्षणमाह।

सन्धिर्बीजोपगमनं

इति। यथा रत्नावल्याम्। वसुभूतिः। बाभ्रव्य सुसदृशीयं राजपुत्र्या। बाभ्रव्यः। ममाप्येवमेव प्रतिभातीत्यनेन नायिकाबीजोपगमात् सन्धिरिति। यथा च वेणीसंहारे। भीमः भवति यज्ञवेदिसम्भवे स्मरति भवती यत् तन्मयोक्तम्।

चञ्चद्भुजभ्रमित-चण्डगदाभिघात-
सञ्चूर्णितोरुयुगलस्य सुयोधनस्य।
स्त्यानावनद्धघनशोणितशोणपाणि-
रुत्तंसयिष्यति कचांस्तव देवि भीमः॥

इत्यनेन मुखोपक्षिप्तस्य पुनरुपगमात् सन्धिरिति।

अथ विबोधः।

विबोधः कार्यमार्गणम्।

यथा रत्नावल्याम्। वसुभूतिः। निरूप्य। देव कुत इयं कन्यका। राजा। देवी जानाति। वासवदत्ता। [1]अज्जउत्त एसा सअरादो पाविदत्ति भणिअ अमच्च जोगन्धरायणेण मम हत्थे णिहिदा। अदो ज्जेव सागरिएत्ति सद्दावीअदि। राजा। आत्मगतम्। यौगन्धरायणेन न्यस्ता। कथमसौ ममानिवेद्य करिष्यतीत्यनेन रत्नावलीलक्षणकार्यान्वेषणाद् विबोधः। यथा च वेणीसंहारे। भीमः। मुञ्चतु मुञ्चतु मामार्यः क्षणमेकम्। युधिष्ठिरः। किमपरमवशिष्टम्। भीमः। सुमहदवशिष्टम्। संयमयामि तावदनेन

१ आर्यपुत्र एषा सागरात् प्राप्तेति भणित्वामात्ययौगन्धरायणेन मम हस्ते निहिता, अत एव सागरिकेति शब्द्यते।

दुःशासनशोणितशोणितेन पाणिना पाञ्चाल्या दुःशासनावकृष्टं केशहस्तम् । युधिष्ठिरः गच्छतु भवान् । अनुभवतु तपस्विनी वेणीसंहारमित्यनेन कार्यसमस्तसंरम्भोपगमनाद् विरोध इति ।

अथ ग्रथनम् ।

ग्रथनं तदुपक्षेपो

यथा रत्नावल्याम् । यौगन्धरायणः । देव क्षम्यतां यद् देवस्यानिवेद्य मयैतद् कृतमित्यनेन वत्सराजस्य रत्नावली-प्रापणकार्योपक्षेपाद् ग्रथनम् । यथा च वेणीसंहारे । भीमः । पाञ्चालि न खलु मयि जीवति संहर्तव्या दुःशासनविलुलिता वेणिरात्मपाणिना । तिष्ठतु तिष्ठतु । स्वयमेवाहं संहरामीत्यनेन द्रौपदीकेशसंयमनकार्यस्योपक्षेपाद् ग्रथनम् ।

अथ निर्णयः ।

अनुभूताख्या तु निर्णयः ॥४६॥

यथा रत्नावल्याम् । यौगन्धरायणः । कृताञ्जलिः । देव श्रूयतामियं सिंहलेश्वरदुहिता सिद्धादेशेनोपदिष्टा योऽस्याः पाणिं ग्रहीष्यति स सार्वभौमो राजा भविष्यति। तत्प्रत्ययादस्माभिः स्वाम्यर्थे बहुशः प्रार्थ्यमानापि सिंहलेश्वरेण देव्याः वासवदत्तायाश्चित्तखेदं परिहरता यदा न दत्ता तदा लावणके देवी दग्धेति प्रसिद्धिमुत्पाद्य तदन्तिकं बाभ्रव्यः प्रहित इत्यनेन यौगन्धरायणः स्वानुभूतमर्थं ख्यापितवानिति निर्णयः । यथा च वेणीसंहारे । भीमः । देव देव अजातशत्रो क्वाद्यापि दुर्योधनहतकः । मया हि तस्य दुरात्मनः ।

भूमौ क्षिप्त्वा शरीरं निहितमिदमसृक्चन्दनाभं निजाङ्गे
लक्ष्मीरार्ये निषिक्ता चतुरुदधिपयःसीमया सार्धमुर्व्या ।
भृत्या मित्राणि योधाः कुरुकुलमखिलं दग्धमेतद्रणाग्नौ
नामैकं यद् ब्रवीषि क्षितिप तदधुना धार्तराष्ट्रस्य शेषम् ॥

इत्यनेन स्वानुभूतार्थकथनाद् निर्णय इति ।

अथ परिभाषणम् ।

परिभाषा मिथो जल्पः ।

रत्नावलीवसुभूतिबाभ्रव्यादीनामर्थानां मुखसन्ध्यादिषु प्रकीर्णानां वत्सराजैकार्थमर्पितत्वम् । वसुभूतिः । सागरिकां निर्वर्ण्याऽऽत्मगतम् । बाभ्रव्य सुसदृशीयं राजपुत्र्या इत्यादिना दर्शितमिति निर्वहणसन्धिः ।

अथ तदङ्गानि ।

सन्धिर्विबोधो ... चतुर्दश ॥४५॥

यथोद्देशं लक्षणमाह ।

सन्धिर्बीजोपगमनं

इति । यथा रत्नावल्याम् । वसुभूतिः । बाभ्रव्य सुसदृशीयं राजपुत्र्या । बाभ्रव्यः । ममाप्येवमेव प्रतिभातीत्यनेन नायिकाबीजोपगमात् सन्धिरिति । यथा च वेणीसंहारे । भीमः भवति यज्ञवेदिसम्भवे स्मरति भवती यत् तन्मयोक्तम् ।

चञ्चद्भुजभ्रमितचण्डगदाभिघात-
सञ्चूर्णितोरुयुगलस्य सुयोधनस्य ।
स्त्यानावनद्धघनशोणितशोणपाणि-
रुत्तंसयिष्यति कचांस्तव देवि भीमः ॥

इत्यनेन मुखोपक्षिप्तस्य पुनरुपगमात् सन्धिरिति ।

अथ विबोधः ।

विबोधः कार्यमार्गणम् ।

यथा रत्नावल्याम् । वसुभूतिः । निरूप्य । देव कुत इयं कन्यका । राजा । देवी जानाति । वासवदत्ता । [1]अज्जउत्त एसा सअरादो पाविदत्ति अमच्च जोगन्धराअणेण मम हत्थे णिहिदा । अदो ज्जेव साअरिअत्ति सद्दावीअदि । राजा । आत्मगतम् । यौगन्धरायणेन न्यस्ता । कथमसौ ममानिवेद्य करिष्यतीत्यनेन रत्नावलीलक्षणकार्यान्वेषणाद् विबोधः । यथा च वेणीसंहारे । भीमः । मुञ्चतु मुञ्चतु मामार्यः क्षणमेकम् । युधिष्ठिरः । किमपरमवशिष्टम् । भीमः । सुमहदवशिष्टम् । संयमयामि तावदनेन

१ आर्य्यपुत्र एषा सागरात् प्राप्तेति भणित्वा अमात्ययौगन्धरायणेन मम हस्ते निहिता अत एव सागरिकेति शब्द्यते ।

दुःशासनशोणितोक्षितेन पाणिना पाञ्चाल्या दुःशासनाकृष्टं केशहस्तम्। युधिष्ठिरः गच्छतु भवान्। अनुभवतु तपस्विनी वेणीसंहारमित्यनेन केशसंयमनकार्यस्यान्वेषणाद् विबोध इति।

अथ ग्रथनम्।

ग्रथनं तदुपक्षेपो

यथा रत्नावल्याम्। यौगन्धरायणः। देव क्षम्यतां यद् देवस्यानिवेद्य मयैतद् कृतमित्यनेन वत्सराजस्य रत्नावली-प्रापणकार्योपक्षेपाद् ग्रथनम्। यथा च वेणीसंहारे। भीमः। पाञ्चालि न खलु मयि जीवति संहर्तव्या दुःशासनविलुलिता वेणिरात्मपाणिना। तिष्ठतु तिष्ठतु। स्वयमेवाहं संहरामीत्यनेन द्रौपदीकेशसंयमनकार्यस्योपक्षेपाद् ग्रथनम्।

अथ निर्णयः।

अनुभूताख्या तु निर्णयः ॥४६॥

यथा रत्नावल्याम्। यौगन्धरायणः। कृताञ्जलिः। देव श्रूयतामियं सिंहलेश्वरदुहिता सिद्धादेशेनोपदिष्टा योऽस्याः पाणिं ग्रहीष्यति स सार्वभौमो राजा भविष्यति। तत्प्रत्ययादस्माभिः स्वाम्यर्थे बहुशः प्रार्थ्यमानापि सिंहलेश्वरेण देव्या वासवदत्तायाश्चित्तखेदं परिहरता यदा न दत्ता तदा लावाणके देवी दग्धेति प्रसिद्धिमुत्पाद्य तदन्तिकं बाभ्रव्यः प्रहित इत्यनेन यौगन्धरायणः स्वानुभूतमर्थं ख्यापितवानिति निर्णयः। यथा च वेणीसंहारे। भीम। देव देव अजातशत्रो क्वाद्यापि दुर्योधनहतकः। मया हि तस्य दुरात्मनः।

भूमौ क्षिप्त्वा शरीरं निहितमिदमसृक्चन्दनाभं निजाङ्गे
लक्ष्मीरार्ये निषिक्ता चतुरुदधिपयःसीमया सार्धमुर्व्या।
भृत्या मित्राणि योधाः कुरुकुलमखिलं दग्धमेतद्रणाग्नौ
नामैकं यद् ब्रवीषि क्षितिप तदधुना धार्तराष्ट्रस्य शेषम् ॥

इत्यनेन स्वानुभूतार्थकथनात् निर्णय इति।

अथ परिभाषणम्।

परिभाषा मिथो जल्पः।

यथा रत्नावल्याम् । रत्नावली । आत्मगतम् । [1]कदावराहा देवीए ण सक्कुणोमि मुहं दंसिदुं । वासवदत्ता । सास्रम् । पुनर्बाहू प्रसार्य । [2]एहि अयि णिठ्ठुरे इदाणीं पि बन्धुसिणेहं दंसेहि । अपवार्य । अज्जउत्त लज्जामि क्खु अहं इमिणा णिसंसत्तणेण ता लहुं अवणेहि से बन्धणं । राजा । यथाऽऽह देवी बन्धनमपनयति । वासवदत्ता । वसुभूति निर्दिश्य । [3]अज्ज अमच्चजोगन्धराअणेण दुज्जणीकदम्हि जेण जाणन्तेण वि णाचक्खिदम्हि इत्यनेनान्योन्यवचनात् परिभाषणम् । यथा च वेणीसंहारे । भीम ।

कृष्टा येनासि राज्ञां सदसि नृपपशुना तेन दुःशासनेन ।

इत्यादिना कृष्णा भानुमती नीचदासीव पाण्डवदारानित्यनेन चान्योन्यम् परिभाषणम् ।

अथ प्रसादः ।

प्रसादः पर्युपासनम् ।

इति । यथा रत्नावल्याम् । देव क्षम्यतामित्यादि दर्शितम् । यथा च वेणीसंहारे । भीम । द्रौपदीमुपसृत्य । देवि पाञ्चालराजतनये दिष्ट्या वर्धसे रिपुकुलक्षयेनेत्यनेन द्रौपद्या भीमसेनेनाऽऽराधितत्वात् प्रसाद इति ।

अथाऽऽनन्दः ।

आनन्दो वाञ्छितावाप्तिः

इति । यथा रत्नावल्याम् । राजा । यथाऽऽह देवी । रत्नावलीं गृह्णाति । यथा च वेणीसंहारे । द्रौपदी । [1]णाह विसुमरिदम्हि एदं वावारं णाहस्स पसादेण पुणो वि सिक्खिस्सं । केशान् बध्नाति । इत्याभ्यां प्रार्थितरत्नावली प्राप्तिकेशसंयमनयोर्वत्सराजद्रौपदीभ्यां प्राप्तत्वादानन्दः ।

अथ समयः ।

---

१ कृतापराधा देव्या न शक्नोमि मुखं दर्शयितुम् ।

२ एहि अयि निष्ठुरे इदानीमपि बन्धुस्नेहं दर्शय । आर्यपुत्र लज्जे खलु अहमनेन नृशंसत्वेन तल्लघु अपनयास्या बन्धनम् ।

३ आर्य अमात्ययौगन्धरायणेन दुर्जनीकृतास्मि येन जानताऽपि नाख्यातमिति ।

समयो दुःखनिर्गमः ॥५०॥

इति । यथा रत्नावल्याम् । वासवदत्ता । रत्नावलीमालिङ्ग्य । [1]समस्सस समस्सस बहिणिए इत्यनेन भगिन्योरन्योन्यसमागमेन दुःखनिर्गमात् समयः । यथा च वेणीसंहारे । भगवन् कुतस्तस्य विजयादन्यद् यस्य भगवान् पुराण-पुरुषः स्वयमेव नारायणो मङ्गलान्याशास्ते ।

कृतगुरुमहदादिक्षोभसम्भूतमूर्ति
गुणिनमुदयनाशस्थानहेतुं प्रजानाम् ।
अजममरमचिन्त्यं चिन्तयित्वापि न त्वां
भवति जगति दुःखी किं पुनर्देव दृष्ट्वा ॥

इत्यनेन युधिष्ठिरदुःखापगमं दर्शयति ।

अथ कृतिः ।

कृतिर्लब्धार्थशमनं

इति । यथा रत्नावल्याम् । राजा । को देव्याः प्रसादं न बहु मन्यते । वासवदत्ता । [2]अज्जउत्त दूरे से मादुउलं ता तथा करेसु जधा बन्धुअणं ण सुमरेदीत्यन्योन्यवचसा लब्धायां रत्नावल्यां राज्ञः सुश्लिष्टये उपशमनात् कृतिरिति । यथा च वेणीसंहारे । कृष्णः । एते खलु भगवन्तो व्यासवाल्मीकीत्यादिनाभिषेकमारब्धवन्तस्तिष्ठन्तीत्यनेन प्राप्तराज्यस्याभिषेकमङ्गलैः स्थिरीकरणं कृतिः ।

अथ भाषणम् ।

मानाद्याप्तिश्च भाषणम् ।

इति । यथा रत्नावल्याम् । राजा । अतःपरमपि प्रियमस्ति ।

यातो विक्रमबाहुरात्मसमतां प्राप्तेयमुर्वीतले
सारं सागरिका ससागरमहीप्राप्त्येकहेतुः प्रिया ।

---

१ समाश्वसिहि समाश्वसिहि भगिनिके इति ।

२ आर्यपुत्र दूरे अस्या मातृकुलं ततस्तथा कुरुष्व यथा बन्धुजनं न स्मरति ।

देवी प्रीतिमुपागता च भगिनीलाभाज्जिता कोसलाः
किं नास्ति त्वयि सत्यमात्यवृषभे यस्मै करोमि स्पृहाम् ॥

इत्यनेन कामार्थमानादिलाभाद् भाषणमिति ।

अथ पूर्वभावोपगूहने ।

कार्यदृष्ट्य० ०पगूहने ।

इति । कार्यदर्शनं पूर्वभावः । यथा रत्नावल्याम् । यौगन्धरायणः । एवं विज्ञाय भगिन्याः सम्प्रति करणीये देवी प्रमाणम् । वासवदत्ता । [1]फुडं ज्जेव किं ण भणेसि पडिवादेहि से रअणमालं त्ति इत्यनेन वत्सराजाय रत्नावली दीयतामिति कार्यस्य यौगन्धरायणाभिप्रायानुप्रविष्टस्य वासवदत्तया दर्शनात् पूर्वभाव इति । अद्भुतप्राप्तिरुपगूहनम् । यथा वेणीसंहारे । नेपथ्ये । महासमरानलदग्धशेषाय स्वस्ति भवते राजन्यलोकाय ।

क्रोधान्धैर्यस्य मोक्षात् क्षतनरपतिभिः पाण्डुपुत्रैः कृतानि
प्रत्याशं मुक्तकेशान्यनुदिनमधुना पार्थिवान्तःपुराणि ।
कृष्णायाः केशपाशः कुपितयमसखो धूमकेतुः कुरूणां
दिष्ट्या बद्धः प्रजानां विरमतु निधनं स्वस्ति राजन्यकेभ्यः ॥

युधिष्ठिरः । देवि एष ते मूर्धजानां संहारोऽभिनन्दितो नभस्तलचारिणा सिद्धजनेनेत्यनेनाद्भुतार्थप्राप्तिरुपगूहनमिति । अस्यार्थसमगात् कृतिरपि भवति ।

अथ काव्यसंहारः ।

वराप्तिः काव्यसंहारः

इति । यथा । किं ते भूयः प्रियमुपकरोमीत्यनेन काव्यार्थसंहरणात् काव्यसंहार इति ।

अथ प्रशस्तिः ।

प्रशस्तिः शुभशंसनम् ॥४८॥

इति । यथा वेणीसंहारे । प्रीततरश्चेद् भवान् तदिदमस्तु ।

---

1 स्फुटमेव किं न भणसि प्रतिपादयास्यै रत्नमालामिति ।

अकृपणमतिः कामं जीव्यात् जनः पुरुषायुषं
भवतु भगवन् भक्तिर्द्वैतं विना पुरुषोत्तमे ।
दयितभुवनो विद्वद्बन्धुर्गुणेषु विशेषवित्
सततसुकृती भूयाद् भूपः प्रसाधितमण्डलः ॥

इति पुनर्दर्शनात् प्रशस्तिः ।

इत्येतानि चतुर्दश निर्वहणाङ्गानि ।

एवं चतुःषष्ट्यङ्गसमन्विताः पञ्चसन्धयः प्रतिपादिताः ।

षट्प्रकारं चाङ्गानां प्रयोजनमित्याह ।

उक्ताङ्गानां प्रयोजनम् ।

इति । कानि पुनस्तानि षट्प्रयोजनानि ।

इष्टस्या॰ ॰नुपक्षयः ॥४९॥

इति । विवक्षितार्थनिबन्धनं गोप्यार्थगोपनं प्रकाश्यार्थप्रकाशनमभिनेयराग-वृद्धिश्चमत्कारित्वं च काव्यस्येतिवृत्तस्य विस्तर इत्यङ्गैः षट्प्रयोजनानि सम्पाद्यन्त इति ।

पुनर्वस्तुविभागमाह ।

द्वेधा ॰परम् ॥५०॥

इति । कीदृक् सूच्यं कीदृक् दृश्यश्रव्यमित्याह ।

नीरसो ॰निरन्तरः ॥५१॥

इति सूच्यस्य प्रतिपादनप्रकारमाह ।

अर्थोप॰ ॰प्रवेशकैः ॥५२॥

इति । तत्र विष्कम्भः ।

वृत्तवर्ति॰ ॰प्रयोजितः ।

इति । अतीतानां भाविनां च कथावयवानां ज्ञापको मध्यमेन मध्यमाभ्यां वा पात्राभ्यां प्रयोजितो विष्कम्भक इति ।

स द्विविधः शुद्धः सङ्कीर्णश्चेत्याह ।

एका॰ नीचमध्यमैः ॥५३॥

इति । एकेन द्वाभ्यां वा मध्यमपात्राभ्यां शुद्धो भवति । मध्यमाधम

पात्रैर्युगपत् प्रयोजितः सङ्कीर्ण इति ।

अथ प्रवेशकः ।

तद्वदेवा॰ ॰सूचकः ॥६१॥

तद्वदेवेति भूतभविष्यदर्थज्ञापकत्वमतिदिश्यते । अनुदात्तोक्त्या नीचेन नीचैर्वा पात्रैः प्रयोजित इति विष्कम्भलक्षणापवादः । अङ्कद्वयस्यान्त इति प्रथमाङ्के प्रतिषेध इति ।

अथ चूलिका ।

अन्तर्जवनिका॰ ॰सूचना ।

नेपथ्यपात्रेणार्थसूचनं चूलिका । यथोत्तरचरिते द्वितीयाङ्कस्यादौ । नेपथ्ये । स्वागतं तपोधनायाः । तत प्रविशति तपोधना इति । नेपथ्यपात्रेण वासन्तिकया आत्रेयीसूचनात् चूलिका । यथा वा वीरचरिते चतुर्थाङ्कस्यादौ । नेपथ्ये । भो भो वैमानिकाः प्रवर्त्यन्तां प्रवर्त्यन्तां मङ्गलानि ।

कृशाश्वान्तेवासी जयति भगवान् कौशिकमुनिः
सहस्रांशोर्वंशे जगति विजयि क्षत्रमधुना ।
विनेता क्षत्रारेर्जगदभयदानव्रतधरः
शरण्यो लोकानां दिनकरकुलेन्दुर्विजयते ॥

इत्यत्र नेपथ्यपात्रैर्देवै रामेण परशुरामो जित इति सूचनात् चूलिका ।

अथाङ्कास्यम् ।

अङ्कान्त॰ ॰र्थसूचनात् ॥६२॥

अङ्कान्त एव पात्रमङ्कान्तपात्रं तेन विच्छिन्नस्योत्तराङ्कमुखस्य सूचनं तद्वशेनोत्तराङ्कावतारोऽङ्कास्यमिति । यथा वीरचरिते द्वितीयाङ्कान्ते । प्रविश्य सुमन्त्रः । भगवन्तौ वसिष्ठविश्वामित्रौ भवतः सभार्गवानाह्वयतः । इतरे । क्व भगवन्तौ । सुमन्त्रः । महाराजदशरथस्यान्तिके । इतरे । तदनुरोधात् तत्रैव गच्छाम इत्यङ्कसमाप्तौ । ततः प्रविशन्त्युपविष्टा वसिष्ठविश्वामित्रपरशुरामा इत्यत्र पूर्वाङ्कान्त एव प्रविष्टेन सुमन्त्रपात्रेण शतानन्दजनककथार्थविच्छेदे उत्तराङ्कमुखसूचनादङ्कास्यमिति ।

अथाङ्कावतारः ।

अङ्का०      मवतापेत् ॥५६॥

यत्र प्रविष्टपात्रेण सूचितमेव पूर्वाङ्काविच्छिन्नार्थतयैवाङ्कान्तरमापतति प्रवेशकविष्कम्भकादिशून्यं सोऽङ्कावतारः । यथा मालविकाग्निमित्रे प्रथमाङ्कान्ते । विदूषकः । [1]तेण हि दुवेवि देवीए पेक्खागेहं गदुअ सङ्गीदोवअरणं करिअ तत्थभवदो दूदं विसज्जेध । अथवा मुदङ्गसद्दो ज्जेव णं उत्थावइस्सदीत्युपक्रमे मृदङ्गशब्दश्रवणानन्तरं सर्वाण्येव पात्राणि प्रथमाङ्कप्रसक्तपात्रसङ्क्रान्तिदर्शनं द्वितीयाङ्कादावारभ्यन्त इति । प्रथमाङ्कार्थाविच्छेदेनैव द्वितीयाङ्कस्यावतरणादङ्कावतार इति ।

पुनस्त्रिधा वस्तुविभागमाह ।

नाट्य०      त्रिधेष्यते ।

केन प्रकारेण त्रैधं तदाह ।

सर्वेषां      श्राव्यमश्राव्यमेव च ॥५७॥

तत्र ।

सर्वश्राव्यं      स्वगतं मतम् ।

इति । सर्वश्राव्यं यद् वस्तु तत् प्रकाशमित्युच्यते । यत् तु सर्वस्याश्राव्यं तत् स्वगतमितिशब्दाभिधेयम् ।

नियतश्राव्यमाह ।

द्विधाऽन्यत्      ०पवारितम् ॥५८॥

इति । अन्यत् तु नियतश्राव्यं द्विप्रकारं जनान्तिकापवारितभेदेन ।

तत्र जनान्तिकमाह ।

त्रिपताककरेणा०      ०तज्जनान्तिकम् ॥

इति । यस्य न श्राव्यं तस्यान्तर ऊर्ध्वं सर्वाङ्गुलं वक्रानामिकं त्रिपताकालक्षणं करं कृत्वाऽन्येन सह यन्मन्त्र्यते तज्जनान्तिकमिति ।

---

१ तेन हि द्वावपि देव्याः प्रेक्षागृहं गत्वा सङ्गीतकोपकरणं कृत्वा तत्रभवतो दूतं विसर्जयतम् । अथवा मृदङ्गशब्द एवैनमुत्थापयिष्यति ।

अथापवारितम् ।

रहस्यं        परावृत्यापवारितम् ॥५९॥

परावृत्यान्यस्य रहस्यकथनमपवारितमिति ।

नाट्यधर्मप्रसङ्गादाकाशभाषितमाह ।

किं ब्रवीष्ये०        ०भाषितम् ॥६०॥

इति । स्पष्टार्थम् ।

अन्यान्यपि नाट्यधर्माणि प्रथमकल्पादीनि कैश्चिदुदाहृतानि । तेषामभारतीयत्वात् नाममात्राभिधेयानां केषाञ्चिद् देशभाषात्मकत्वाद् नाट्यधर्मत्वाभावात् लक्षणं नोक्तमित्युपसंहरति ।

इत्याद्य०        ०प्रपञ्चैः ॥६१॥

इति । वस्तुविभेदजातं वस्तु वर्णनीयं तस्य विभेदजातं नानाभेदाः । रामायणादि बृहत्कथां च गुणाढ्यनिर्मितां विभाव्य आलोच्य । तदनु एतदनन्तरम् । नेत्रिति । नेता वक्ष्यमाणलक्षणः रसाश्च तेषामानुगुण्यात् चित्रां विचित्ररूपां कथामाख्यायिकाम् । चारूणि यानि वचांसि तथा प्रपञ्चैः विस्तारैः आसूत्रयेत् ग्रथ्नीयात् । तत्र बृहत्कथामूलं मुद्राराक्षसं चाणक्य नाम्ना तेनाथ शकटालगृहे रहः कृत्यां विधाय सहसा सपुत्रो निहतो नृपः ।

योगानन्दयशःशेषे पूर्वनन्दसुतस्ततः ।

चन्द्रगुप्तः कृतो राजा चाणक्येन महौजसा ॥

इति बृहत्कथायां सूचितं श्रीरामायणोक्तं रामकथादि ज्ञेयम् । इति श्रीविष्णुसूनोर्धनिकस्य कृतौ दशरूपावलोके प्रथमप्रकाशः समाप्तः ।

---

## द्वितीयः प्रकाशः

स्वप्रकाशेनान्योन्यं भेदसिद्धये वस्तुभेदं प्रतिपाद्येदानीं नायकभेदः प्रतिपाद्यते ।

नेता॰ ॰युवा ॥१॥

बुद्ध्युत्साहस्मृ॰ धार्मिकः ।

नेता नायको विनयादिगुणसम्पन्नो भवतीति ।

तत्र विनीतः । यथा वीरचरिते ।

> यद् ब्रह्मवादिभिरुपासितवन्द्यपादे
> विद्यातपोव्रतनिधौ तपतां वरिष्ठे ।
> दैवात् कृतस्त्वयि मया विनयापचार
> स्तत्र प्रसीद भगवन्नयमञ्जलिस्ते ॥

मधुरः प्रियदर्शनः । यथा तत्रैव ।

> राम राम नयनाभिरामताम्
> आशयस्य सदृशीं समुद्वहन् ।
> अप्रतर्क्यगुणरामणीयकः
> सर्वथैव हृदयङ्गमोऽसि मे ॥

त्यागी सर्वस्वदायकः । यथा ।

> त्वचं कर्णः शिबिर्मांसं जीवं जीमूतवाहनः ।
> ददौ दधीचिरस्थीनि नास्त्यदेयं महात्मनाम् ॥

दक्षः क्षिप्रकारी । यथा वीरचरिते ।

> स्फूर्जद्वज्रसहस्रनिर्मितमिव प्रादुर्भवत्यग्रतो
> रामस्य त्रिपुरान्तकृद् दिविषदां तेजोभिरिद्धं धनुः ।
> शुण्डारः कलभेन यद्वदचले वत्सेन दोर्दण्डक

तस्मिन्नाहित एव गर्जितगुणं कृष्टं च भग्नं च तत् ।

प्रियंवदः प्रियभाषी । यथा तत्रैव ।

उत्पत्तिर्जमदग्नितः स भगवान् देवः पिनाकी गुरु-
र्वीर्यं यत्तु न तद् गिरां पथि ननु व्यक्तं हि तत् कर्मभिः ।
त्यागः सप्तसमुद्रमुद्रितमहीनिर्व्याजदानावधिः
सत्यब्रह्मतपोनिधेर्भगवतः किं वा न लोकोत्तरम् ॥

रक्तलोकः । यथा तत्रैव ।

त्रय्यास्त्राता यस्तवायं तनूज-
स्तेनाद्यैव स्वामिनस्ते प्रसादात् ।
राजन्वत्यो रामभद्रेण राज्ञा
लब्धक्षेमाः पूर्णकामाश्चरामः ।

एवं शौचादिष्वप्युदाहार्यम् । [तत्र शौचं नाम मनोनैर्मल्यादिना कामाद्यनभिभूतत्वम् । यथा रघौ ।

का त्वं शुभे कस्य परिग्रहो वा
किं वा मदभ्यागमकारणं ते ।
आचक्ष्व मत्वा वशिनां रघूणां
मनः परस्त्रीविमुखप्रवृत्ति ॥

वाग्मी । यथा हनुमन्नाटके ।

बाह्वोर्बलं न विदितं न च कार्मुकस्य
त्रैयम्बकस्य तनिमा तत एष दोषः ।
तच्चापलं परशुराम मम क्षमस्व
डिम्भस्य दुर्विलसितानि मुदे गुरूणाम् ॥

रूढवंशो यथा ।

ये चत्वारो दिनकरकुलक्षत्रसन्तानमल्ली-
मालाम्लानस्तबकमधुपा जज्ञिरे राजपुत्राः ।
रामस्तेषामचरमभवस्ताडकाकालरात्रि-
प्रत्यूषोऽयं सुचरितकथाकन्दलीमूलकन्दः ॥ ]

स्थिरो वाङ्मनःक्रियाभिरचञ्चलः । यथा वीरचरिते ।

प्रायश्चित्तं चरिष्यामि पूज्यानां वो व्यतिक्रमात् ।
न त्वेवं दूषयिष्यामि शस्त्रग्रहमहाव्रतम् ॥

यथा वा भर्तृहरिशतके ।

प्रारभ्यते न खलु विघ्नभयेन नीचैः
प्रारभ्य विघ्नविहता विरमन्ति मध्याः ।
विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः
प्रारब्धमुत्तमगुणास्त्वमिवोद्वहन्ति ॥

धृवा प्रतिज्ञा । बुद्धिर्ज्ञानम् । गृहीतविशेषकरी तु प्रज्ञा । यथा मालविकाग्निमित्रे ।

यद् यद् प्रयोगविषये भाविकमुपदिश्यते मया तस्यै ।
तद् तद् विशेषकरणात् प्रत्युपदिशतीव मे बाला ॥

स्पष्टमन्यत् ।

भेतृविशेषानाह ।

भेदैश्चतुर्धा ललितशान्तोदात्तोद्धतैरयम् ॥२॥

यथोद्देशं लक्षणमाह ।

निश्चिन्तो मृदुः ।

सचिवादिविहितयोगक्षेमत्वात् चिन्तारहितः । अतएव गीतादिकलाविष्टो भोगप्रवणश्च शृङ्गारप्रधानत्वात् च सुकुमारसत्त्वाचारो मृदुरिति ललितः । यथा रत्नावल्याम् ।

राज्यं निर्जितशत्रु योग्यसचिवे न्यस्तः समस्तो भरः
सम्यक्पालनलालिताः प्रशमिताशेषोपसर्गाः प्रजाः ।
प्रद्योतस्य सुता वसन्तसमयस्त्वं चेति नाम्ना धृतिं
कामः काममुपैत्वयं मम पुनर्मन्ये महानुत्सवः ।

अथ शान्तः ।

सामान्यगुण॰ द्विजादिकः ॥३॥

विनयादिनेतृसामान्यगुणयोगी धीरशान्तो द्विजादिक इति विप्रवणिक्

सचिवादीनां प्रकरणनेतृणामुपलक्षणम् । विवक्षितं चैतत् । तेन नैश्चिन्त्या-दिगुणसम्भवेऽपि विप्रादीनां शान्ततैव न लालित्यम् । यथा मालतीमाधव मृच्छकटिकादौ माधवचारुदत्तादि ।

तत उदयगिरेरिवैक एव
स्फुरितगुणद्युतिसुन्दरः कलावान् ।
इह जगति महोत्सवस्य हेतु
र्नयनवतामुदियाय बालचन्द्रः ॥

इत्यादि । यथा वा ।

मखशतपरिपूतं गोत्रमुद्भासितं यत्
सदसि निबिडचैत्यब्रह्मघोषैः पुरस्तात् ।
मम निधनदशायां वर्तमानस्य पापै
स्तदसदृशमनुष्यैर्घुष्यते घोषणायाम् ॥

अथ धीरोदात्तः ।

महासत्त्वो० धीरोदात्तो दृढव्रतः ॥४॥

महासत्त्वः शोकक्रोधाद्यनभिभूतान्तःसत्त्वः । अविकत्थनोऽनात्म-श्लाघनः । निगूढाहङ्कारो विनयच्छन्नावलेपः दृढव्रतोऽङ्गीकृतनिर्वाहकः धीरोदात्तः । यथा नागानन्दे । जीमूतवाहनः ।

शिरामुखैः स्यन्दत एव रक्तम्
अद्यापि देहे मम मांसमस्ति ।
तृप्तिं न पश्यामि तवैव तावत्
किं भक्षणात् त्वं विरतो गरुत्मन् ॥

यथा च रामं प्रति ।

आहूतस्याभिषेकाय विसृष्टस्य वनाय च ।
न मया लक्षितस्तस्य स्वल्पोऽप्याकारविभ्रमः ।

यच्च केषाञ्चित् स्थैर्यादीनां सामान्यगुणानामपि विशेषलक्षणे क्वचित् सङ्कीर्तनं तत्तेषां तत्राधिक्यप्रतिपादनार्थम् । ननु च कथं जीमूतवाहनादिर्निगीषाविरहाद्धीरोदात्त इत्युच्यते । वीरत्वं हि नाम सर्वोत्कर्षेण

वृत्तिः। तच्च विजिगीषुत्व एवोपपद्यते। जीमूतवाहनस्तु निर्जिगीषुतयैव कविना प्रतिपादितः। यथा।

तिष्ठन् भाति पितुः पुरो भुवि यथा सिंहासने किं तथा
यत् संवाहयतः सुखं हि चरणौ तातस्य किं राज्यतः।
किं भुक्ते भुवनत्रये धृतिरसौ भुक्तोज्झिते या गुरो-
रायासः खलु राज्यमुज्झितगुरोस्तन् नास्ति कश्चिद् गुणः॥

इत्यनेन।

पित्रोर्विधातुं शुश्रूषां त्यक्त्वैश्वर्यं क्रमागतम्।
वनं याम्यहमप्येष यथा जीमूतवाहनः॥

इत्यनेन च। अतोऽस्यात्यन्तशमप्रधानत्वात् परमकारुणिकत्वाच्च वीतरागवत् शान्तता। यच्चत् चात्रोक्तं यद् यथाभूत राज्यसुखादौ निरभिलाष नायकमुपादायान्तरा तथाभूतमसमयस्यानुपपादकत्वम्। यच्चोक्तं सामान्यगुणयोगी द्विजादिर्धीरशान्त इति। तदपि पारिभाषिकत्वादवास्तवमित्यभेदकम्। अतो वस्तुस्थित्या बुद्धयुधिष्ठिरजीमूतवाहनादिव्यवहाराः शान्ततामाविर्भावयन्ति। अतोऽप्यत्र। यद् तावदुक्तं सर्वोत्कर्षेण वृत्तिर्धीरोदात्तस्येति। न तज् जीमूतवाहनादौ परिहीयते। न ह्येकरूपैव विजिगीषुता यः केनापि शौर्यत्यागदयादिनाऽन्यानतिशेते स विजिगीषुर्न यः परापकारेणार्थग्रहादिप्रवृत्तः। तथात्वे च मार्गदूषकादेरपि धीरोदात्तत्वप्रसक्तिः। रामादेरपि जगत्पालनीयमिति दुष्टनिग्रहे प्रवृत्तस्य नान्तरीयकत्वेन भूम्यादिलाभः। जीमूतवाहनादिस्तु प्राणैरपि परार्थसम्पादनाद् विश्वमप्यतिशेत इत्युदात्ततमः। यथोक्तम्। तिष्ठन् भातीत्यादिना विषयसुखपराङ्मुखतेति। तत् सत्यम्। कार्पण्यहेतुषु स्वसुखतृष्णासु निरभिलाषा एव जिगीषवः। यदुक्तम्।

स्वसुखनिरभिलाषः खिद्यसे लोकहेतोः
प्रतिदिनमथवा ते वृत्तिरेवंविधैव।
अनुभवति हि मूर्ध्ना पादपस्तीव्रमुष्णं
शमयति परितापं छायया संश्रितानाम्॥

इत्यादिना मलयवत्यनुरागोपवर्णनेन शमाभावः शान्तनायकतां प्रत्युत निषेधति। शान्तत्वं चानहंकृतत्वं तच्च विप्रादेरौचित्यप्राप्तमिति वस्तुस्थितिः। विप्रादेः शान्तता न स्वपरिभाषामात्रेण। बुद्धजीमूतवाहनयोस्तु कारुणिकत्वाविशेषेऽपि सकामनिष्कामकरुणत्वादिधर्मैर्भेदः। अतो जीमूतवाहनादेर्धीरोदात्तत्वमिति।

अथ धीरोद्धतः।

दर्पमात्सर्यभूयिष्ठो विकत्थनः ॥६॥

दर्पः शौर्यादिमदः मात्सर्यमसहनता। मन्त्रबलेनाविद्यमानवस्तुप्रकाशनं माया। छद्म वञ्चनामात्रम्। चलोऽनवस्थितः चण्डो रौद्रः स्वगुणशंसी विकत्थनः धीरोद्धतो भवति।
यथा जामदग्न्यः।

कैलासोद्धारसारत्रिभुवनविजय।

इत्यादि। यथा च रावणः।

त्रैलोक्यैश्वर्यलक्ष्मीहठहरणसहा बाहवो रावणस्य।

धीरललितादिशब्दाश्च यथोक्तगुणसमारोपितावस्थाभिधायिनो वत्सराजादेर्न जात्या कश्चिदवस्थितरूपो ललितादिरस्ति। तथा हि महाकविप्रबन्धेषु विरुद्धानेकरूपाभिधानमसमञ्जसमेव स्यात् जातेरनपायित्वात्। तथा च भवभूतिनैक एव जामदग्न्यः।

ब्राह्मणातिक्रमत्यागो भवतामेव भूतये।
जामदग्न्यश्च वो मित्रमन्यथा दुर्मनायते॥

इत्यादिना रावणं प्रति धीरोदात्तत्वेन कैलासोद्धारसारेत्यादिभिश्च रामादीन् प्रति प्रथमं धीरोद्धतत्वेन पुनः पुण्या ब्राह्मणजातिरित्यादिभिश्च धीरशान्तत्वेनोपवर्णितः। न चावस्थान्तराभिधानमनुचितमङ्गभूतनायकानां नायकान्तरापेक्षया महासत्त्वादेरव्यवस्थितत्वादङ्गिनस्तु रामादेरेकप्रबन्धोपात्तान् प्रत्यवस्थान्तरोपादानमन्याय्यम्। यथोदात्तत्वाभिमतस्य रामस्य छद्मना वालिवधादमहासत्त्वतया स्वावस्थापरित्याग इति। वक्ष्यमाणानां च दक्षिणाद्यवस्थानां पूर्वां प्रत्यन्य

याहृत इति नियमसापेक्षत्वेनाविर्भावानुपातावस्थातोऽस्यान्तराभिधानं भङ्गाद्गिरोरप्यविरुद्धम् ।

अथ शृङ्गारनेत्रवस्था ।

स दक्षिण          धृष्ट ।

नायकप्रकरणात् पूर्वां नायिकां प्रत्यन्ययाऽपूर्वनायिकयाऽपहृतचित्त-स्त्र्यवस्थो वक्ष्यमाणभेदेन स चतुरवस्थ । तदेवं पूर्वोक्तानां चतुर्णां प्रत्येकं चतुरवस्थत्वेन षोडशधा नायक ।

तत्र ।

दक्षिणोऽस्यां सहृदय

योऽस्यां ज्येष्ठायां हृदयेन सह व्यवहरति स दक्षिण । यथा ममैव ।

प्रसीदत्यालोके किमपि किमपि प्रेमगुरवो
रतिक्रीडा कोऽपि प्रतिदिनमपूर्वोऽस्य विनय ।
सविस्रम्भ कश्चित् कथयति च किञ्चित् परिजना
न चाहं प्रत्येमि प्रियसखि किमप्यस्य विकृतिम् ॥

यथा वा ।

उचित प्रणयो वरं विहन्तुं
बहव खण्डनहेतवो हि दृष्टा ।
उपचारविधिर्मनस्विनीनां
ननु पूर्वाभ्यधिकोऽपि भावशून्य ॥

अथ शठ ।

गूढविप्रियकृच्छठ ।

दक्षिणस्यापि नायिकान्तरापहृतचित्ततया विप्रियकारित्वाविशेषेऽपि सहृदयत्वेन शठाद् विशेष । यथा ।

शठान्यस्या काञ्चीमणिरणितमाकर्ण्य सहसा
यदाश्लिष्यन्नेव प्रशिथिलभुजग्रन्थिरभव ।
तदेतत् क्वाचक्षे घृतमधुमयत्वद्बहुवचो
विषेणाघूर्णन्ती किमपि न सखी मे गणयति ।

अथ धृष्टः ।

व्यक्ताङ्गवैकृतो धृष्टो

यथाऽमरुशतके ।

लाक्षालक्ष्म ललाटपट्टमभितः केयूरमुद्रा गले
वक्त्रे कज्जलकालिमा नयनयोस्ताम्बूलरागोऽपरः ।
दृष्ट्वा कोपविधायि मण्डनमिदं प्रातश्चिरं प्रेयसो
लीलातामरसोदरे मृगदृशः श्वासाः समाप्तिं गताः ॥

भेदान्तरमाह ।

अनुकूलस्त्वेकनायिकः ॥७॥

यथा ।

अद्वैतं सुखदुःखयोरनुगतं सर्वास्ववस्थासु यद्
विश्रामो हृदयस्य यत्र जरसा यस्मिन्नहार्यो रसः ।
कालेनावरणात्ययात् परिणते यत् स्नेहसारे स्थितं
भद्रं तस्य सुमानुषस्य कथमप्येकं हि तत् प्राप्यते ॥

किमवस्थः पुनरेषां वत्सराजादिर्नाटिकानायकः स्यादित्युच्यते । पूर्वमनुपजातनायिकान्तरानुरागोऽनुकूलः । परतस्तु दक्षिणः । ननु च गूढविप्रियकारित्वाद् व्यक्ताङ्गविप्रियत्वाच्च शाठ्यधाष्टर्येऽपि कस्मान्न भवतः । न तथाविधविप्रियेऽपि वत्सराजादेः प्रबन्धसमाप्तेर्ज्येष्ठां नायिकां प्रति सहृदयत्वाद् दक्षिणत्वम् । न चोभयोर्ज्येष्ठाकनिष्ठयोर्नायकस्य स्नेहेन न भवितव्यमिति वाच्यमविरोधात् । महाकविप्रबन्धेषु च ।

स्नाता तिष्ठति कुन्तलेश्वरसुता वारोऽङ्गराजस्वसु-
र्द्यूते रात्रिरियं जिता कमलया देवी प्रसाद्याद्य च ।
इत्यन्तःपुरसुन्दरीः प्रति मया विज्ञाय विज्ञापिते
देवेनाप्रतिपत्तिमूढमनसा द्वित्राः स्थितं नाडिकाः ॥

इत्यादावस्यपाठेन सर्वनायिकासु प्रतिपत्त्युपनिबन्धनात् । तथा च भरतः ।

मधुरस्त्यागी रागं न याति मदनस्य नापि वशमेति ।
अवमानितश्च नार्या विरज्यते स तु भवेज्ज्येष्ठः ॥

इत्यत्र न रामं याति न मयमस्य वरामेतीरयनेनाप्याधारण एकस्या स्नेहो निषिद्धो दक्षिणस्येति। अतो वत्सराजादेराप्रबन्धसमाप्ति स्थितं दाक्षिण्यमिति। षोडशानामपि प्रत्येकं ज्येष्ठमध्यमाधमत्वेनाऽष्टाचत्वारिंशत् नायकभेदा भवन्ति।

सहायानाह।

पताकानायकस्त्वन्यः तद्गुणः ॥७॥

प्रागुक्तप्रासङ्गिकेतिवृत्तविशेषः पताका तन्नायकः पीठमर्दः प्रधानेति वृत्तनायकस्य सहायः। यथा मालतीमाधवे मकरन्दः रामायणे सुग्रीवः।

सहायान्तरमाह।

एकविद्यो विदूषकः।

गीतादिविद्यानां नायकोपयोगिनीनामेकस्या विद्याया वेदिता विटः। हास्यकारी विदूषकः। अस्य विकृताकारवेषादित्वं हास्यकारित्वेनैव सम्यते। यथा शेखरको नागानन्दे विटः। विदूषकः प्रसिद्ध एव।

अथ प्रतिनायकः।

लुब्धो व्यसनी रिपुः ॥८॥

तस्य नायकस्येत्थम्भूतः प्रतिपक्षनायको भवति। यथा रामयुधिष्ठिरयोः रावणदुर्योधनौ।

अथ सात्त्विका नायकगुणाः।

शोभा गुणाः ॥९॥

तत्र।

नीचे शौर्योत्कर्षौ।

नीचे घृणा। यथा वीरचरिते।

उत्तालताडकोत्पातदर्शनेऽप्यप्रकम्पितः।
नियुक्तस्तत्प्रमाथाय स्त्रैणेन विचिकित्सति ॥

गुणाधिके स्पर्धा यथा।

एतां पश्य पुरःस्थलीमिह किल क्रीडाकिरातो हरः
कोदण्डेन किरीटिना सरभसं चूडान्तरे ताडितः।

इत्याकर्ण्य कथाद्भुतं हिमनिभाभासी सुमध्यापते
मन्दं मन्दमकारि येन निजयोर्दोर्दण्डयोर्मण्डनम् ॥

शौर्यशोभा यथा । ममैव ।

प्राप्तैः स्वैरपि समतापकरणो मूर्च्छाविरामक्षणे
स्वाधीनव्रणिताङ्गशस्त्रनिचितो रोमोद्गमं वर्मयन् ।
भग्नानुन्नमयन् निजान् परभटान् सन्तर्जयन् निष्ठुरं
धन्यो धाम जयश्रियः पृथुरणस्तम्भे पताकायते ॥

दक्षशोभा । यथा वीरचरिते ।

स्फूर्जद्वज्रसहस्रनिर्मितमिव प्रादुर्भवत्यग्रतो
रामस्य त्रिपुरान्तकृद्दिविषदां तेजोभिरिद्धं धनुः ।
शुण्डारः कलभेन यद्वदचले वत्सेन दोर्दण्डकः
तस्मिन्नाहित एव गर्जितगुणं कृष्टं च भग्नं च तत् ॥

अथ विलासः ।

गतिः सधैर्या          सस्मितं वचः ॥१०॥

यथा ।

दृष्टिस्तृणीकृतजगत्त्रयसत्त्वसारा
धीरोद्धता नमयतीव गतिर्धरित्रीम् ।
कौमारकेऽपि गिरिवद् गुरुतां दधानो
वीरो रसः किमयमेत्युत दर्प एव ॥

अथ माधुर्यम् ।

श्लक्ष्णो          सुमहत्यपि ।

महत्यपि विकारहेतौ मधुरो विकारो माधुर्यम् । यथा ।

कपोले जानक्याः करिकलभदन्तद्युतिमुषि
स्मरस्मेरं गण्डोड्डमरपुलकं वक्त्रकमलम् ।
मुहुः पश्यन् शृण्वन् रजनिचरसेनाकलकलं
जटाजूटग्रन्थिं द्रढयति रघूणां परिवृढः ॥

अथ गाम्भीर्यम् ।

गाम्भीर्यं          नोपलक्ष्यते ॥११॥

मृदुविकाराद्युपलम्भाद् विकारानुपलब्धिरन्यति माधुर्यादन्यद् गाम्भीर्यम्। यथा।

> आहूतस्याभिषेकाय विसृष्टस्य वनाय च।
> न मया लक्षितस्तस्य स्वल्पोऽप्याकारविभ्रमः ॥

अथ स्थैर्यम्।

व्यवसायाद०          ०मुत्तरादपि।

यथा वीरचरिते।

> प्रायश्चित्तं चरिष्यामि पूज्यानां वो व्यतिक्रमात्।
> न त्वेवं दूषयिष्यामि शस्त्रग्रहमहाव्रतम्।

अथ तेजः।

अधिक्षेपाद्यसहनं तेजः प्राणात्ययेष्वपि ॥१२॥

यथा।

> ब्रूत नूतनकूष्माण्डफलानां के भवन्त्यमी।
> अङ्गुलीदर्शनाद् येन न जीवन्ति मनस्विनः ॥

अथ ललितम्।

शृङ्गाराकार          ललितं मृदु।

स्वाभाविकः शृङ्गारो मृदुः। तथाविधा शृङ्गारचेष्टा च ललितम्। यथा ममैव।

> लावण्यमन्मथविलासविजृम्भितेन
> स्वाभाविकेन सुकुमारमनोहरेण।
> किंवा ममैव सखि यापि ममोपदिष्टा
> तस्यैव किं न विषमं विदधीत तापम् ॥

अथौदार्यम्।

प्रियोक्त्या०          ०सद्ग्रहः ॥१३॥

प्रियवचनेन सहाऽऽजीविताद्दर्शनमौदार्यं सतामुपग्रहश्च। यथा नागानन्दे।

शिरामुखैः स्यन्दत एव रक्तम्
अद्यापि देहे मम मांसमस्ति ।
तृप्तिं न पश्यामि तवैव तावत्
किं भक्षणात् त्वं विरतो गरुत्मन् ॥

सदुपग्रहो यथा ।

एते वयममी दाराः कन्येयं कुलजीवितम् ।
ब्रूत येनात्र वः कार्यमनास्था बाह्यवस्तुषु ॥

अथ नायिका ।

स्वान्या नायिका त्रिधा ।

तद्गुणेति यथोक्तसम्भवि नायकसामान्यगुणयोगिनी नायिकेति । स्वस्त्री परस्त्री साधारणस्त्रीत्यनेन विभागेन त्रिधा ।

तत्र स्वीयाया विभागगर्भं सामान्यलक्षणमाह ।

मुग्धा शीलार्जवादियुक् ॥१५॥

शीलं सुवृत्तम् । पतिव्रताऽकुटिला लज्जावती पुरुषोपचारनिपुणा स्वीया नायिका ।

तत्र शीलवती यथा ।

[1]कुलबालिआए पेच्छह जोव्वणलायण्णविब्भमविलासा ।
पवसन्ति व्व पवसिए एन्ति व्व पिए घरं एन्ते ॥

आर्जवयोगिनी यथा ।

[2]हसिअमविआरमुद्धं भमिअं विरहिअविलाससुच्छायं ।
भणिअं सहावसरलं धण्णाण घरे कलत्ताणं ॥

लज्जावती यथा ।

---

१ कुलबालिकायाः प्रेक्षध्वं यौवनलावण्यविभ्रमविलासाः ।
प्रवसन्तीव प्रवसिते आगच्छन्तीव प्रिये गृहमागते ॥

२ हसितमविकारमुग्धं भ्रमितं विरहितविलाससुच्छायम् ।
भणितं स्वभावसरलं धन्यानां गृहे कलत्राणाम् ॥

[1]लज्जापज्जत्तपसाहणाइं परभत्तिणिप्पिवासाइं।
अविणअदुम्मेहाइं धण्णाण घरे कलत्ताइं॥

सा चेयं विधा स्वीया मुग्धामध्याप्रगल्भाभेदात् त्रिविधा।

तत्र।

मुग्धा नववय॰ मृदु क्रुधि।

प्रथमावतीर्णतारुण्यमन्मथा रमणे वामशीला सुखोपायप्रसादना मुग्धा नायिका।

तत्र वयोमुग्धा यथा।

विस्तारी स्तनभार एष गमितो न स्वोचितामुन्नतिं
रेखोद्भासिकृतं वलित्रयमिदं न स्पष्टनिम्नोन्नतम्।
मध्येऽस्या ऋजुरायतार्धकपिशा रोमावली निर्मिता
रम्यं यौवनशैशवव्यतिकरोन्मिश्रं वयो वर्तते॥

यथा च ममैव।

उच्छ्वसन्मण्डलप्रान्तरेखमाबद्धकुड्मलम्।
अपर्याप्तमुरो वृद्धे शंसत्यस्याः स्तनद्वयम्॥

काममुग्धा यथा।

दृष्टिः सालसतां बिभर्ति न शिशुक्रीडासु बद्धादरा
श्रोत्रे प्रेषयति प्रवर्तितसखीसम्भोगवार्तास्वपि।
पुंसामङ्कमपेतशङ्कमधुना नारोहति प्राग् यथा
बाला नूतनयौवनव्यतिकरावष्टभ्यमाना शनैः।

रतवामा यथा।

व्याहृता प्रतिवचो न सन्दधे
गन्तुमैच्छदवलम्बितांशुका।
सेवते स्म शयनं पराङ्मुखी
सा तथापि रतये पिनाकिनः॥

---

१ लज्जापर्याप्तप्रसाधनानि परभर्तृनिष्पिपासानि।
अविनयदुर्मेधांसि धन्यानां गृहे कलत्राणि॥

मृदु कोपे यथा ।

प्रथमजनिते बाला मन्यौ विकारमजानती
कितवचरितेनासज्याङ्के विनम्रमुखैव सा ।
चिबुकमलिकं चोन्नम्योच्चैरकृत्रिमविभ्रमा
नयनसलिलस्यन्दिन्योष्ठे रुदत्यपि चुम्बिता ॥

एवमन्येऽपि लज्जासंवृतानुरागनिबन्धना मुग्धाव्यवहारा निबन्धनीयाः यथा ।

न मध्ये संस्कारं कुसुममपि बाला विषहते
न निःश्वासैः सुभ्रूर्जनयति तरङ्गव्यतिकरम् ।
नवोढा पश्यन्ती लिखितमिव भर्तुः प्रतिमुखं
प्ररोहद्रोमाञ्चा न पिबति न पार्श्वं चलयति ॥

अथ मध्या ।

मध्योद्यता •सुरतक्षमा ॥१२॥

सम्प्राप्ततारुण्यकामा मोहान्तरतयोग्या मध्या ।

तत्र यौवनवती यथा ।

आलापान् भ्रूविलासो विरलयति लसद्बाहुविक्षिप्तियातं ।
नीवीग्रन्थिं प्रथिम्ना प्रतनयति मनाङ् मध्यनिम्नो नितम्बः ।
उत्पुष्यत्पार्श्वमूर्च्छत्कुचशिखरमुरो नूनमन्तः स्मरेण
स्पृष्टा कोदण्डकोट्या हरिणशिशुदृशो दृश्यते यौवनश्रीः ॥

कामवती यथा ।

स्मरनवनदीपूरेणोढाः पुनर्गुरुसेतुभि
र्यदपि विधृतास्तिष्ठन्त्याराद्पूर्णमनोरथाः ।
तदपि लिखितप्रख्यैरङ्गैः परस्परमुन्मुखा
नयननलिनीनालाकृष्टं पिबन्ति रसं प्रियाः ।

मध्यासम्भोगो यथा ।

[1]ताव च्चिअ रइसमए महिलाणं विब्भमा विराअन्ति ।
जाव ण कुवलअदलसच्छहाइं मउलेन्ति णअणाइं ॥

---

१ तावदेव रतिसमये महिलानां विभ्रमा विराजन्ते ।
यावन्न कुवलयदलसच्छायानि मुकुलयन्ति नयनानि ॥

एवं धीरायामधीरायां धीराधीरायामप्युदाहार्यम् ।

यथाऽस्या मानवृत्ति ।

धीरा सोत्प्रासव० ०परुषाक्षरम् ॥१६॥

मध्याधीरा कृतापराधं प्रियं सोत्प्रासवक्रोक्त्या खेदयेत् । यथा माघे ।

न खलु वयममुष्य दानयोग्याः
पिबति च पाति च यासकौ रहस्त्वाम् ।
व्रज विटपममुं ददस्व तस्यै
भवतु यतः सदृशोश्चिराय योगः ॥

धीराधीरा साश्रु सोत्प्रासवक्रोक्त्या खेदयेत् । यथा अमरुशतके ।

बाले नाथ विमुञ्च मानिनि रुषं रोषान्मया किं कृतं
खेदोऽस्मासु न मेऽपराध्यति भवान् सर्वेऽपराधा मयि ।
तत् किं रोदिषि गद्गदेन वचसा कस्याग्रतो रुद्यते
नन्वेतन्मम का तवास्मि दयिता नास्मीत्यतो रुद्यते ॥

अधीरा साश्रु परुषाक्षरम् । यथा ।

यातु यातु किमनेन तिष्ठता
मुञ्च मुञ्च सखि मादरं वृथा ।
खण्डिताधरकलङ्कितं प्रियं
शक्नुमो न नयनैर्निरीक्षितुम् ॥

एवमपरेऽपि व्रीडानुपहिताः स्वयमनभियोगकारिणो मध्याव्यवहारा भवन्ति । यथा ।

स्वेदाम्भःकणिकाञ्चितेऽपि वदने जातेऽपि रोमोद्गमे
विस्रम्भेऽपि गुरौ पयोधरभरोत्कम्पेऽपि वृद्धिं गते ।
दुर्वारस्मरनिर्भरेऽपि हृदये नैवाभियुक्तः प्रियः
तन्वङ्ग्या हठकेशकर्षणघनाश्लेषामृते लुब्धया ॥

स्वतोऽनभियोगस्तु हठकेशग्रहणघनाश्लेषामृते लुब्धयेत्युत्प्रेक्षा प्रतीत ।

अथ मुग्धा ।

यौवनाद्या     रतारम्भेऽप्यचेतना ॥१७॥

नवयौवना । यथा ममैव ।

अभ्युन्नतस्तनमुरो नयने च दीर्घे
वक्रे भ्रुवावतितरां वचनं ततोऽपि ।
मध्योऽधिकं तनुरतीवगुरुर्नितम्बो
मन्दा गतिः किमपि चाद्भुतयौवनायाः ॥

यथा च ।

स्तनतटमिदमुत्तुङ्गं निम्नो मध्यः समुन्नतं जघनम्
विषमे मृगशावाक्ष्या वपुषि नवे क इव न स्खलति ॥

भावप्रगल्भा यथा ।

न जाने सम्मुखायाते प्रियाणि वदति प्रिये ।
सर्वाण्यङ्गानि किं यान्ति नेत्रतामुत कर्णताम् ॥

रतप्रगल्भा यथा ।

कान्ते तल्पमुपागते विगलिता नीवी स्वयं बन्धनात्
वासः प्रश्लथमेखलागुणधृतं किञ्चिन्नितम्बे स्थितम् ।
एतावत् सखि वेद्मि केवलमहं तस्याङ्गसङ्गे पुनः
कोऽसौ कास्मि रतं नु किं कथमिति स्वल्पापि मे न स्मृतिः ॥

एवमन्येऽपि परित्यक्तह्रीमन्मथाविष्टप्रायाः प्रगल्भाव्यवहारा वेदितव्याः । यथा ।

क्वचित् ताम्बूलाक्तः क्वचिदगरुपङ्काङ्कमलिनः
क्वचिच्चूर्णोद्गारी क्वचिदपि च सालक्तकपदः ।
वलीभङ्गाभोगैरलकपतितैः शीर्णकुसुमैः
स्त्रियाः सर्वावस्थं कथयति रतं प्रच्छदपटः ॥

अथास्याः कोपचेष्टा ।

सावहित्थादरोदास्ते     तं चरेत् ।

महाकविरत्येनाऽऽकारसंवरणेनाऽऽदरेण चापराधिनम् वर्जेत धी

सावहित्थादरा । रत्यादुदासीना क्रुधा कोपेन भवति ।

सावहित्थादरा । यथाऽमरुशतके ।

एकत्रासनसंस्थितिः परिहृता प्रत्युद्गमाद् दूरत-
स्ताम्बूलाहरणच्छलेन रभसाऽऽश्लेषोऽपि संविघ्नितः ।
आलापोऽपि न मिश्रितः परिजनं व्यापारयन्त्याऽन्तिके
कान्तं प्रत्युपचारतश्चतुरया कोपः कृतार्थीकृतः ॥

रत्यादुदासीना यथा ।

आयस्ता कलहं पुरेव कुरुते न स्रंसने वाससो
भग्नभ्रूगतिखण्डनाननमधरं धत्ते न केशग्रहे ।
अङ्गान्यर्पयति स्वयं भवति नो वामा हठालिङ्गने
तन्व्या शिक्षित एष सम्प्रति कुतः कोपप्रकारोऽपरः ॥

इतरा त्वधीरप्रगल्भा कुपिता सति सन्तर्ज्य ताडयति । यथाऽमरुशतके ।

कोपात् कोमललोलबाहुलतिकापाशेन बद्ध्वा दृढं
नीत्वा केलिनिकेतनं दयितया सायं सखीनां पुरः ।
भूयोऽप्येवमिति स्खलत्कलगिरा संसूच्य दुश्चेष्टितं
धन्यो हन्यत एव निह्नुतिपरः प्रेयान् रुदत्या हसन् ॥

धीराधीरप्रगल्भा भाव्याभीरेव तं वदति सोत्प्रासवक्रोक्त्या । यथा तत्रैव ।

कोपो यत्र भ्रुकुटिरचना निग्रहो यत्र मौनं
यत्रान्योन्यस्मितमनुनयो दृष्टिपातः प्रसादः ।
तस्य प्रेम्णस्तदिदमधुना वैशसं पश्य जातं
त्वं पादान्ते लुठसि न च मे मन्युमोक्षः खलायाः ॥

पुनश्च ।

द्वेधा ज्येष्ठा    द्वादशोदिता ॥१५॥

मध्याप्रगल्भाभेदानां प्रत्येकं ज्येष्ठाकनिष्ठात्वभेदेन द्वादश भेदा भवन्ति । मुग्धा त्वेकरूपैव । ज्येष्ठाकनिष्ठे । यथाऽमरुशतके ।

दृष्ट्वैकासनसंस्थिते प्रियतमे पश्चादुपेत्यादराद्
एकस्या नयने निमील्य विहितक्रीडानुबन्धच्छलः ।
ईषद्वक्रितकन्धरः सपुलकः प्रेमोल्लसन्मानसाम्
अन्तर्हासलसत्कपोलफलकां धूर्तोऽपरां चुम्बति ॥

न चात्रयोर्दाक्षिण्यप्रेमण्यामेव व्यवहारः । अपितु प्रेम्णापि । यथा प्रागुक्तं दक्षिणलक्षणावसरे । (एवं च धीरमध्याधीरमध्याधीरा-धीरमध्याधीरप्रगल्भाधीरप्रगल्भाधीराधीरप्रगल्भाभेदानां प्रत्येकं ज्येष्ठा-कनिष्ठाभेदात् द्वादशानां मालवदत्तारत्नावलीवत् प्रबन्धनायिकानामुदा-हरणानि महाकविप्रबन्धेष्वनुसर्तव्यानि ।)

अथान्यस्त्री ।

अन्यस्त्री        कुर्यादङ्ग्यङ्गिसंश्रयम् ॥१९॥

नायकान्तरसम्बन्धिनी अन्योढा । यथा ।

दृष्टिं हे प्रतिवेशिनि क्षणमिहाप्यस्मिन् गृहे दास्यसि
प्रायेणास्य शिशोः पिता न विरसाः कौपीरपः पास्यति ।
एकाकिन्यपि यामि तद्वरमितः स्रोतस्तमालाकुलं
नीरन्ध्रास्तनुमालिखन्तु जरठच्छेदानलग्रन्थयः ॥

इयं त्वङ्गिनि प्रधाने रसे न क्वचिन् निबन्धनीयेति न प्रपञ्चिता । कन्यका तु पित्राद्यायत्तत्वादपरिणीताप्यन्यस्त्रीत्युच्यते । तस्यां पित्रा-दिभ्योऽलभ्यमानायां सुलभायामपि परोपरोधवशान्नायकभयात् प्रच्छन्नं कामितं प्रवर्तते । यथा मालत्यां माधवस्य सागरिकायां च वत्सराजस्येति । तदनुरागश्च स्वेच्छया प्रधानाप्रधानरससमाश्रयो निबन्धनीयः । यथा रत्नावलीनागानन्दयोः सागरिकामलयवत्यनुराग इति ।

साधारणस्त्री        •प्रागल्भ्यधौर्त्ययुक्

तद्व्यवहारो विस्तरतः शास्त्रान्तरे निर्दिष्टः । दिङ्मात्रं तु ।

छन्नकाम•        पण्डकान् ॥२०॥

रक्तेव        •मात्राविवासयेत् ।

छन्नं ये कामयन्ते ते छन्नकामा श्रोत्रियवणिक्सिद्धप्रभृतयः। सुखार्थोऽप्रयासावाप्तधनः सुखप्रयोजनो वा। मूढो मूर्खः। स्वतन्त्रा निरङ्कुशः। अहङ्कृतः। पण्डको वातपण्डादिः। एतान् बहुवित्तान् रक्तेव रञ्जयेदर्थार्थम्। तत्प्रधानत्वात् तद्वृत्तेः। गृहीतार्थान् कुट्टन्यादिना निष्कासयेत् पुनः प्रतिसन्धानाय। इदं तासामौत्सर्गिकं रूपम्।

रूपकेषु तु।

रक्तैव ० ० ० दिव्यनृपाश्रये ॥२१॥

प्रहसनवर्जिते प्रकरणादौ रक्तैवैषा विधेया। यथा मृच्छकटिकायां वसन्तसेना चारुदत्तस्य। प्रहसने त्वरक्तापि हास्यहेतुत्वात्। नाटकादौ तु दिव्यनृपाश्रये नैव विधेया।

अथ अवस्थान्तराणि।

आसामष्टा० ० ० पतिकादिकाः।

स्वाधीनपतिका वासकसज्जा विरहोत्कण्ठिता खण्डिता कलहान्तरिता विप्रलब्धा प्रोषितप्रियाऽभिसारिकेत्यष्टौ स्वस्त्रीप्रभृतीनामवस्थाः। नायिकाप्रभृतीनामप्यवस्थान्तरत्वे अवस्थान्तराभिधानं पूर्वासां धर्मित्व प्रतिपादनायाष्टाविति न्यूनाधिकव्यवच्छेदः। न च वासकसज्जादेः स्वाधीनपतिकायामन्तर्भावः। अनासन्नप्रियत्वाद् वासकसज्जाया न स्वाधीनपतिकात्वम्। यदि चैष्यत्प्रियापि स्वाधीनपतिका प्रोषितप्रियापि न पृथग् वाच्या। न चेयता व्यवधानेनास्मीतेरिति नियन्तुं शक्यम्। न चाविदित प्रियव्यलीकाया खण्डितात्वं नापि प्रवृत्तरतिभोगेच्छाया प्रोषितप्रियात्वं स्वयमगमनात् नायकं प्रत्यप्रयोजकत्वात् नाभिसारिकात्वम्। एवमुत्क ण्ठिताप्यन्यैव पूर्वाभ्यः। चिरयत्प्राप्तप्रियागमनसमयातिवृत्तिविधुरा न वासकसज्जा। तथा विप्रलब्धापि वासकसज्जातोऽन्यैव पूर्वाभ्यः। उभयथा नायको दृष्ट इति प्रतारणाभिप्रायाच्च वासकसज्जोत्कण्ठितयोः पृथक्। कल हान्तरिता तु यद्यपि विदितव्यलीका तथाप्यगृहीतप्रियानुनया पश्चात्ताप प्रकाशितप्रसादा पृथगेव खण्डितायाः। तत् स्थितमेतदष्टावस्था इति।

तत्र।

अथ कलहान्तरिता ।

कलहान्तरिता॰ ॰ऽनुशयार्तियुक् ॥२४॥

यथा ।

निःश्वासा वदनं दहन्ति हृदयं निर्मूलमुन्मथ्यते
निद्रा नैति न दृश्यते प्रियमुखं नक्तंदिवं रुद्यते ।
अङ्गं शोषमुपैति पादपतितः प्रेयांस्तथोपेक्षितः
सख्यः कं गुणमाकलय्य दयिते मानं वयं कारिताः ॥

अथ विप्रलब्धा ।

विप्रलब्धोक्तसमयमप्राप्तेऽतिविमानिता ।

यथा ।

उत्तिष्ठ दूति यामो यामो यातस्तथापि नाऽऽयातः ।
यातः परमपि जीवेद् जीवितनाथो भवेत् तस्याः ॥

अथ प्रोषितप्रिया ।

दूरदेशान्तरस्थे प्रोषितप्रिया ।

यथाऽमरुशतके ।

आदृष्टिप्रसरात् प्रियस्य पदवीमुद्वीक्ष्य निर्विण्णया
विच्छिन्नेषु पथिष्वहःपरिणतौ ध्वान्ते समुत्सर्पति ।
दत्त्वैकं सशुचा गृहं प्रति पदं पान्थस्त्रियाऽस्मिन् क्षणे
माभूदागत इत्यमन्दवलितग्रीवं पुनर्वीक्षितम् ॥

अथाऽभिसारिका ।

कामार्ताऽ॰ ऽभिसारिका ॥२५॥

यथाऽमरुशतके ।

उरसि निहितस्तारो हारः कृता जघने घने
कलकलवती काञ्ची पादौ रणन्मणिनूपुरौ ।
प्रियमभिसरस्येवं मुग्धे त्वमाहतडिण्डिमा
यदि किमधिकत्रासोत्कम्पं दिशः समुदीक्षसे ॥

यथा च ।

तत्र सखी । यथा ।

मृगशिशुदृशस्तस्यास्तापं कथं कथयामि ते
दहनपतिता दृष्टा मूर्तिर्मया न हि वैधवी ।
इति तु विदितं नारीरूपः स लोकदृशां सुधा
तव शठतया शिल्पोत्कर्षो विधेर्विघटिष्यते ॥

यथा च ।

[1]सच्चं जाणइ दट्ठुं सरिसम्मि जणम्मि जुज्जए रामो ।
मरउ ण तुमं भणिस्सं मरणं पि सलाहणिज्जं से ॥

स्वयं दूती । यथा ।

[2]महु एहि किं णिवालय हरसि णिअं बाउ जइ वि मे सिचयं ।
साहेमि कस्स सुन्दर दूरे गामो अहं एक्का ॥

इत्याद्यूह्यम् ।

अथ योषिदलङ्काराः ।

यौवने  विंशतिः ।

यौवन सत्वोद्भूता विंशतिरलङ्कारा स्त्रीणां भवन्ति ।

तत्र ।

भावो  ……  शरीरजाः ॥२८॥

शोभा  ……  यत्नजाः ॥२९॥

तत्र भावहावहेलास्त्रयोऽङ्गजाः । शोभा कान्तिर्दीप्तिर्माधुर्यं प्रागल्भ्यमौदार्यं धैर्यमित्ययत्नजाः सप्त ।

लीला  ……  स्वभावजाः ॥३०॥

तानेव निर्दिशति ।

निर्विकारात्मकात्……ऽल्पविक्रिया ।

---

1 सत्यं जानाति द्रष्टुं सदृशे जने युज्यते रागः ।
म्रियतां न त्वां भणिष्यामि मरणमपि श्लाघनीयमस्याः ॥

2 मधुरैहि किं निवारक हरसि निजं वायो यद्यपि मे सिचयं ।
साधयामि कस्य सुन्दर दूरे ग्रामोऽहमेका ॥

तत्र विकारहेतौ सत्यपि अविकारकं सत्त्वम् । यथा कुमारसम्भवे ।

श्रुताप्सरोगीतिरपि क्षणेऽस्मिन्
हरः प्रसंख्यानपरो बभूव ।
आत्मेश्वराणां न हि जातु विघ्नाः
समाधिभेदप्रभवा भवन्ति ॥

तस्मादविकाररूपात् सत्त्वात् य प्रथमो विकारोऽन्तर्विपरिवर्ती बीजस्योच्छूनतेव स भावः । यथा ।

दृष्टिः सालसतां बिभर्ति न शिशुक्रीडासु बद्धादरा
श्रोत्रं प्रेषयति प्रवर्तितसखीसम्भोगवार्तास्वपि ।
पुंसामङ्कमपेतशङ्कमधुना नारोहति प्राग् यथा
बाला नूतनयौवनव्यतिकरावष्टभ्यमाना शनैः ॥

यथा वा कुमारसम्भवे ।

हरस्तु किञ्चित् परिलुप्तधैर्य
श्चन्द्रोदयारम्भ इवाम्बुराशिः ।
उमामुखे बिम्बफलाधरोष्ठे
व्यापारयामास विलोचनानि ॥

यथा वा ममैव ।

[1]तं च्चिअ वअणं ते च्चेअ लोअणं जोव्वणं पि तं च्चेअ ।
अण्णा अणङ्गलच्छी अण्णं च्चिअ किं पि साहेइ ।

अथ हावः ।

हेवाकसस्तु [illegible] विकारकृत् ॥३१॥

प्रतिनियताङ्गविकारकारी शृङ्गारः स्वभावविशेषो हावः । यथा ममैव ।

---

१ तदेव वचनं ते चैव लोचने यौवनमपि तदेव ।
अन्यानङ्गलक्ष्मीरन्यदेव किमपि साधयति ॥

[1]जं किं पि पेच्छमाणं भणमाणं रे जहा तह च्चेय।
णिज्झाअ णेहमुद्धं वअस्स मुद्धं णिअच्छेहि ॥

अथ हेला।

स एव हेला सुव्यक्तशृङ्गाररससूचिका।

हाव एव स्पष्टभूयोविकारत्वात् सुव्यक्तशृङ्गाररससूचको हेला। यथा ममैव।

[2]तह झत्ति से पअत्ता सव्वङ्गं विब्भमा थणुब्भेए।
संसइअबालभावा होइ चिरं जह सहीणं पि ॥

अथायत्नजाः सप्त। तत्र शोभा।

रूपोपभोग० विभूषणम् ॥३२॥

यथा कुमारसम्भवे।

तां प्राङ्मुखीं तत्र निवेश्य वामां
तन्वीं व्यलम्बन्त पुरो निषण्णाः।
भूतार्थशोभाह्रियमाणनेत्राः
प्रसाधने संनिहितेऽपि नार्यः ॥

इत्यादि। यथा च शाकुन्तले।

अनाघ्रातं पुष्पं किसलयमलूनं कररुहै-
रनाविद्धं रत्नं मधु नवमनास्वादितरसम्।
अखण्डं पुण्यानां फलमिव च तद्रूपमनघं
न जाने भोक्तारं कमिह समुपस्थास्यति विधिः ॥

अथ कान्तिः।

मन्मथाप्यायितच्छाया सैव कान्तिरिति स्मृता।

शोभैव रागावतारघनीकृता कान्तिः। यथा।

---

१ यत् किमपि प्रेक्षमाणं भणमानं रे यथा तथैव।
निर्ध्याय स्नेहमुग्धां वयस्य मुग्धां पश्य ॥

२ तथा झटित्यस्याः प्रवृत्ताः सर्वाङ्गं विभ्रमाः स्तनोद्भेदे।
संशयितबालभावा भवति चिरं यथा सखीनामपि

उन्मीलद्वदनेन्दुदीप्तिविसरैर्दूरे समुत्सारितं
भिन्नं पीनकुचस्थलस्य च रुचा हस्तप्रभाभिर्हतम् ।
एतस्याः कलविङ्ककण्ठकदलीकल्पं मिलत्कौतुकाद्
अप्राप्ताङ्गसुखं रुषेव सहसा केशेषु लग्नं तमः ॥

यथा हि महाश्वेतावर्णनावसरे भट्टबाणस्य ।

अथ माधुर्यम् ।

अनुल्बणत्वं माधुर्यं

यथा शाकुन्तले ।

सरसिजमनुविद्धं शैवलेनापि रम्यं
मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति ।
इयमधिकमनोज्ञा वल्कलेनापि तन्वी
किमिव हि मधुराणां मण्डनं नाऽऽकृतीनाम् ॥

अथ दीप्तिः ।

दीप्तिः कान्तेस्तु विस्तरः ॥३३॥

यथा ।

[1]देआ पसिअ णिअत्तसु मुहससिजोह्णाविलुत्ततमणिवहे ।
अहिसारिआण विग्घं करेसि अण्णाणं विहआसे ॥

अथ प्रागल्भ्यम् ।

निःसाध्वसत्वं प्रागल्भ्यं

मनःक्षोभपूर्वकोऽङ्गसादः साध्वसं तदभावः प्रागल्भ्यम् । यथा ममैव ।

तथा व्रीडा विधेयाऽपि तथा मुग्धाऽपि सुन्दरी ।
कलाप्रयोगचातुर्ये सभास्वाचार्यकं गता ॥

अथौदार्यम् ।

औदार्यं प्रश्रयः सदा ।

---

1 देवि प्रसीद निवर्तस्व मुखशशिज्योत्स्नाविलुप्ततमोनिवहे ।
अभिसारिकाणां विघ्नं करोषि अन्यासां हताशे ॥

यथा ।

'दिअहं खु दुक्खिआए सअलं काऊण गेहवावारं ।
गरुएवि मण्णुदुक्खे भरिमो पाअन्तसुत्तस्स ॥

यथा वा । भ्रूभङ्गे सहसोद्गतेत्यादि ।

अथ धैर्यम् ।

चापलाविहता ●विकत्थना ॥१४॥

चापलानुपहता मनोवृत्तिरात्मगुणानामनाख्यायिका धैर्यमिति । यथा मालतीमाधवे ।

ज्वलतु गगने रात्रौ रात्रावखण्डकलः शशी
दहतु मदनः किंवा मृत्योः परेण विधास्यति ।
मम तु दयितः श्लाघ्यस्तातो जनन्यमलान्वया
कुलममलिनं न त्वेवायं जनो न च जीवितम् ॥

अथ स्वाभाविका दश । तत्र

प्रियानुकरणं● ●विचेष्टितैः ।

प्रियकृतानां वाग्वेषचेष्टानां शृङ्गारिणीभिरङ्गनाभिरनुकरणं लीला । यथा ममैव ।

'तह दिट्ठं तह भणिअं ताए णिअदं तहा तहा सीणं ।
अवलोइअं सइण्हं सविब्भमं जह सवत्तीहिं ॥

यथा वा ।

तेनोदितं वदति याति तथा यथासौ ।

इत्यादि ।

अथ विलासः ।

तात्कालिको● ●क्रियादिषु ॥१५॥

---

१ दिवसं खलु दुःखितायाः सकलं कृत्वा गृहव्यापारं ।
गुरुण्यपि मन्युदुःखे भरिमा पादान्ते सुप्तस्य ॥

२ तथा दृष्टं तथा भणितं तया नियतं तथा तथा सीनं ।
अवलोकितं सतृष्णं सविभ्रमं यथा सपत्नीभिः ॥

दयितावलोकनादिकालेऽङ्गक्रियायां वचने च सातिशयविशेषोत्पत्ति विलासः । यथा मालतीमाधवे ।

अत्रान्तरे किमपि वाग्विभवातिवृत्त
वैचित्र्यमुल्लसितविभ्रममायताक्ष्याः ।
तद् भूरिसात्त्विकविकारविशेषरम्यम्
आचार्यकं विजयि मान्मथमाविरासीत् ॥

अथ विच्छित्तिः ।

आकल्परचना •पोषकृत् ।

स्तोकोऽपि वेषः बहुतरकमनीयताकारी विच्छित्तिः । यथा कुमारसम्भवे ।

कर्णार्पितो लोध्रकषायरूक्षे
गोरोचनाक्षेपनितान्तगौरे ।
तस्याः कपोले परभागलाभाद्
बबन्ध चक्षूंषि यवप्ररोहः

अथ विभ्रमः ।

विभ्रमस्त्वरया विपर्ययः ॥३६॥

यथा ।

अभ्युद्गते शशिनि पेशलकान्तदूती
संलापसंवलितलोचनमानसाभिः ।
अग्राहि मण्डनविधिर्विपरीतभूषा
विन्यासहासितसखीजनमङ्गनाभिः ॥

यथा वा ममैव ।

श्रुत्वाऽऽयातं बहिः कान्तमसमाप्तविभूषया ।
भालेऽञ्जनं दृशोर्लाक्षा कपोले तिलकः कृतः ॥

अथ किलकिञ्चितम् ।

क्रोधाश्रु किलकिञ्चितम् ।

यथा ममैव ।

रतिक्रीडाद्यूते कथमपि समासाद्य समयं
मया लब्धे तस्याः क्वणितकलकण्ठार्धमधरे।
कृतभ्रूभङ्गासौ प्रकटितविलक्षार्धरुदित
स्मितक्रोधोद्भ्रान्तं पुनरपि विदध्यान् मयि मुखम् ॥

अथ मोट्टायितम्।

मोट्टायितं – कथादिषु ॥३७॥

इष्टकथादिषु प्रियतमकथानुकरणादिषु प्रियानुरागेण भावितान्तःकरणत्वं मोट्टायितम्। यथा पद्मगुप्तस्य।

चित्रवर्तिन्यपि नृपे तत्त्वावेशेन चेतसि।
व्रीडार्धवलितं चक्रे मुखेन्दुमवशैव सा ॥

यथा वा।

मातः कं हृदये निधाय सुचिरं रोमाञ्चिताङ्गी मुहु
र्जृम्भामन्थरतारका मुकुलितापाङ्गा दधाना धृतिम्।
सुप्तेवाऽऽलिखितेव शून्यहृदया लेखावशेषीभव-
त्यात्मद्रोहिणि किं ह्रिया कथय मे गूढो निहन्ति स्मरः ॥

यथा वा ममैव।

स्मरदवथुनिमित्तं गूढमुन्नेतुमस्याः
सुभग तव कथायां प्रस्तुतायां सखीभिः।
भवति विततपृष्ठोदस्तपीनस्तनाग्रा
ततवलयितबाहुर्जृम्भितैः साङ्गभङ्गैः ॥

अथ कुट्टमितम्।

सानन्दान्तः – केशाधरग्रहे।

यथा।

नान्दीपदानि रतिनाटकविभ्रमाणाम्
आज्ञाक्षराणि परमाण्यथवा स्मरस्य।
दष्टेऽधरे प्रणयिना विधुताग्रपाणेः
सीत्कारशुष्करुदितानि जयन्ति नार्याः ॥

अथ विव्वोकः ।

गर्वाभिमाना•  •ऽनादरक्रिया ॥३८॥

यथा ममैव ।

सव्याजं तिलकालकान् विरलयन् लोलाङ्गुलिः संस्पृशन्
वारंवारमुदञ्चयन् कुचयुगप्रोदञ्चिनीलाञ्चलम् ।
यद् भ्रूभङ्गतरङ्गिताञ्चितदृशा सावज्ञमालोकितम्
तद्गर्वादवधीरितोऽस्मि न पुनः कान्ते कृतार्थीकृतः ॥

अथ ललितम् ।

सुकुमाराङ्ग  भवेत् ।

यथा ममैव ।

सभ्रूभङ्गं करकिसलयावर्तनैरालपन्ती
सा पश्यन्ती ललितललितं लोचनस्याञ्चलेन ।
विन्यस्यन्ती चरणकमले लीलया स्वैरपातै
निःसङ्गीतं प्रथमवयसा नर्तिता पङ्कजाक्षी ॥

अथ विहृतम् ।

प्राप्तकालं न  हि तत् ॥३९॥

प्राप्तावसरस्यापि वाक्यस्य लज्जया यदवचनं तद् विहृतम् । यथा ।

पादाङ्गुष्ठेन भूमिं किसलयरुचिना सापदेशं लिखन्ती
भूयो भूयः क्षिपन्ती मयि सितशबले लोचने लोलतारे ।
वक्त्रं ह्रीनम्रमीषत्स्फुरदधरपुटं वाक्यगर्भं दधाना
यन्मां नोवाच किञ्चित् स्थितमपि हृदये मानसं तद्दुनोति ॥

३ * अथ नेतुः कार्यान्तरसहायानाह ।

मन्त्री  •तस्यार्थचिन्तने ।

तस्य नेतुरर्थचिन्तायां तन्त्रावापादिलक्षणायां मन्त्री वाऽऽत्मा वोभयं वा सहायः ।

तत्र विभागमाह ।

मन्त्रिणा  विग्रहः ॥४०॥

उक्तलक्षणो ललितो नेता सम्प्राप्तसिद्धिः । शेषा धीरोदात्तादयः । अनियमेन मन्त्रिणा स्वेन चोभयेन चाऽङ्गीकृतसिद्धय इति ।

धर्मसहायास्तु ।

ऋत्विक्० ०ब्रह्मवादिनः ।

ब्रह्म वेदस्तं वदति व्याचष्टे वा तच्छीला ब्रह्मवादिनः । आत्मज्ञानिनो वा । शेषाः प्रतीताः ।

दुष्टदमने दण्डसहायास्तु ।

सुहृत्कुमारा० ०सैनिकाः ॥४१॥

स्पष्टम् । एवं तत्तत्कार्यान्तरेषु सहायान्तराणि योज्यानि ।

यथाह ।

अन्तःपुरे स्वरूपकार्योपयोगिनः ॥४२॥

षण्डाद्यो राज्ञः ख्यातो हीनजातिः ।

विशेषान्तरमाह ।

ज्येष्ठमध्याधमत्वेन सोत्तमादिता ।

एवं प्रागुक्तानां नायकनायिकादूतदूतीमन्त्रिपुरोहितादीनामुत्तममध्यमाधमभावेन त्रिरूपता । उत्तमादिभावश्च न गुणसङ्ख्योपचयापचयेन किं तर्हि गुणातिशयतारतम्येन ।

एवं नाट्ये विधातव्यो नायकः सपरिच्छदः ॥४३॥

उक्तो नायकस्तद्व्यापारस्तूच्यते ।

तद्व्यापारात्मिका शृङ्गारचेष्टितैः ।

प्रवृत्तिरूपो नेतृव्यापारस्वभावो वृत्तिः । सा च कैशिकी सात्त्वत्यारभटीभारतीभेदात् चतुर्विधा । तासां गीतनृत्यविलासकामोपभोगाद्युपलक्ष्यमाणो मृदुः शृङ्गारी कामफलावच्छिन्नो व्यापारः कैशिकी ।

सा तु ।

नर्मतत्स्फञ्ज० ०चतुरङ्गिका ॥४४॥

तदित्यनेन सर्वत्र नर्म परामृश्यते ।

तत्र

वैदग्ध्यक्रीडितं    विहितं त्रिधा ॥५३॥

आत्मोपक्षेपसम्भोगमानैः    नर्मभयवशादोदितम् ॥५४॥

अग्राम्य इष्टजनावर्जनरूपः परिहासो नर्म । तच्च शुद्धहास्येन स शृङ्गारहास्येन सभयहास्येन च रचितं त्रिविधम् । शृङ्गारवदपि स्वानुराग निवेदनसम्भोगेच्छाप्रकाशनसापराधप्रियप्रतिभेदनैस्त्रिविधमेव । भय नर्मापि शुद्धं रसान्तराङ्गभावात् द्विविधम् । एवं षड्विधस्य प्रत्येकं वाग्वेषचेष्टाव्यतिकरेणाष्टादशविधत्वम् ।

तत्र वचोहास्यनर्म यथा ।

पत्युः शिरश्चन्द्रकलामनेन
स्पृशेति सख्या परिहासपूर्वम् ।
सा रञ्जयित्वा चरणौ कृताशी
र्माल्येन तां निर्वचनं जघान ॥

वेषनर्म यथा नागानन्दे विदूषकशेखरकव्यतिकरे । क्रियानर्म यथा मालविकाग्निमित्रे उत्स्वप्नायमानस्य विदूषकस्योपरि निपुणिका सर्पभ्रमकारणं दण्डकाष्ठं पातयति । एवं वयस्यादिष्वपि वाग्वेषचेष्टापरत्वमुदाहार्यम् ।

शृङ्गारवदात्मोपक्षेपनर्म यथा ।

मध्याह्नं गमय त्यज श्रमजलं स्थित्वा पयः पीयतां
मा शून्येति विमुञ्च पान्थ विवशः शीतः प्रपामण्डपः ।
तामेव स्मर घस्मरस्मरशरत्रस्तां निजप्रेयसीं
त्वच्चित्तं तु न रञ्जयन्ति पथिक ग्राम्याः प्रपापालिका ॥

सम्भोगनर्म यथा ।

[1]सालोए च्चिअ सूरे घरिणी घरसामिअस्स घेत्तूण ।
णेच्छन्तस्स वि पाए धुअइ हसन्ती हसन्तस्स ॥

माननर्म यथा ।

---

१ सालोक एव सूर्ये गृहिणी गृहस्वामिकस्य गृहीत्वा ।
अनिच्छतोऽपि पादौ धुनोति हसन्ती हसतः ॥

तदवितथमवादीर्यन्मम त्वं प्रियेति
प्रियजनपरिभुक्तं यद् दुकूलं दधानः ।
मदधिवसतिमागाः कामिनां मण्डनश्रीः
व्रजति हि सफलत्वं वल्लभालोकनेन ॥

भयनर्म यथा रत्नावल्यामालेख्यदर्शनावसरे । सुसङ्गता । [1]जाणिदो मए एसो सव्वो वुत्तन्तो समं चित्तफलहएण ता देवीए णिवेदइस्स मित्यादि ।

शृङ्गाराद् भयनर्म । यथा ममैव ।

अभिव्यक्तालीकः सकलविफलोपायविभवः
चिरं ध्यात्वा सद्यः कृतकृतकसंरम्भनिपुणम् ।
इतः पृष्ठे पृष्ठे किमिदमिति सन्त्रास्य सहसा
कृताश्लेषं धूर्तः स्मितमधुरमालिङ्गति वधूम् ॥

अथ नर्मस्फूर्जः ।

नर्मस्फूर्जः [illegible] नवसङ्गमे ।

यथा मालविकाग्निमित्रे सङ्केते नायकमभिसृतायां नायिकायां नायकः ।

विसृज सुन्दरि सङ्गमसाध्वसं
ननु चिरात् प्रभृति प्रणयोन्मुखे ।
परिगृहाण गते सहकारतां
त्वमतिमुक्तलताचरितं मयि ॥

मालविका । [2]भट्टा देवीए भएण अप्पणो वि पिअं कादुं ण पारेमीत्यादि ।

अथ नर्मस्फोटः ।

नर्मस्फोटस्तु लवैः ॥४७॥

यथा मालतीमाधवे । मकरन्दः ।

---

१ ज्ञातो मयैष सर्वो वृत्तान्तः सह चित्रफलकेन तत् देव्यै निवेदयिष्यामि ।
२ भर्तः, देव्या भयेनात्मनोऽपि प्रियं कर्तुं न पारयामि ।

गमनमलसं शून्या दृष्टिः शरीरमसौष्ठवं
श्वसितमधिकं किं न्वेतत् स्यात् किमन्यदितोऽथवा ।
भ्रमति भुवने कन्दर्पाज्ञा विकारि च यौवनं
ललितमधुरास्ते ते भावाः क्षिपन्ति च धीरताम् ॥

इत्यत्र गमनादिभिरनुभावैर्माधवस्य मालत्यामनुरागः स्तोकः प्रकाश्यते ।

अथ नर्मगर्भः ।

एभिरङ्गै• कैशिकी ॥४८॥

यथाऽमरुशतके ।

दृष्ट्वैकासनसंस्थिते प्रियतमे पश्चादुपेत्यादरात्
एकस्या नयने निमील्य विहितक्रीडानुबन्धच्छलः ।
ईषद्वक्रितकन्धरः सपुलकः प्रेमोल्लसन्मानसाम्
अन्तर्हासलसत्कपोलफलकां धूर्तोऽपरां चुम्बति ॥

यथा प्रियदर्शिकायां गर्भाङ्के वत्सराजवेषसुसङ्गतास्थाने साक्षाद्वत्सराजप्रवेशः ।

अथ सात्त्वती ।

विशोका— परिवर्तकः ॥४९॥

शोकहीनः सत्त्वशौर्यत्यागदयार्जवादिभावोत्तरो नायकव्यापारः सात्त्वती । तदङ्गानि च संलापोत्थापकसाङ्घात्यपरिवर्तकाख्यानि ।

तत्र ।

संलापको मिथः ।

यथा वीरचरिते । रामः । अयं स यः किल सपरिवारकार्त्तिकेयविजयावर्जितेन भगवता नीललोहितेन परिवत्सरसहस्रान्तेवासिने तुभ्यं प्रसादीकृतः परशुः । परशुरामः । राम राम दाशरथे स एवायमाचार्यपादानां प्रियः परशुः ।

अस्त्रप्रयोगखुरलीकलहे गणानां
सैन्यैर्वृतो विजित एव मया कुमारः ।

एतावतापि परिरभ्य कृतप्रसाद-
प्राचादमुं प्रियसुतो भगवान् गुरुर्मे ॥

इत्यादिनानाप्रकारमावरसेन रामपरशुरामयोरन्योन्यगभीरवचसा संलाप इति ।

अथोत्थापकः ।

उत्थापकस्तु ... परम् ॥१०॥

यथा वीरचरिते ।

आनन्दाय च विस्मयाय च मया दृष्टोऽसि दुःखाय वा
वैतृष्ण्यं नु कुतोऽद्य सम्प्रति मम त्वद्दर्शने चक्षुषः ।
त्वत्साङ्गत्यसुखस्य नास्मि विषयः किं वा बहुव्याहृतै-
रस्मिन् विश्रुतजामदग्न्यविजये बाहौ धनुर्जृम्भताम् ॥

अथ साङ्घात्यः ।

मन्त्रार्थ ... सङ्घभेदनम् ।

मन्त्रशक्त्या । यथा मुद्राराक्षसे राक्षससहायादीनां चाणक्येन स्वबुद्धया भेदनम् । अर्थशक्त्या तत्रैव । यथा पर्वतकाभरणस्य राक्षस हस्तगमनेन मलयकेतुसहोत्थायिभेदनम् । दैवशक्त्या तु । यथा रामायणे रामस्य दैवशक्त्या रावणाद् विभीषणस्य भेद इत्यादि ।

अथ परिवर्तकः ।

प्रारब्धोत्थान० ... परिवर्तकः ॥११॥

प्रस्तुतस्योत्थानकार्यस्य परित्यागेन कार्यान्तरकरणं परिवर्तकः । यथा वीरचरिते ।

हेरम्बदन्तमुसलोल्लिखितैकभित्ति
वक्षो विशालविशिखव्रणलाञ्छनं मे ।
रोमाञ्चकञ्चुकितमद्भुतवीरलाभाद्
यत् सत्यमद्य परिरब्धुमिवेच्छति त्वाम् ॥

रामः । भगवन् परिरम्भणमिति प्रस्तुतप्रतीपमेतदित्यादि ।

सात्वतीमुपसंहृत्यारभटीलक्षणमाह ।

नष्टं वर्षवरैर्मनुष्यगणनाभावादपास्य त्रपाम्
अन्तः कञ्चुकिकञ्चुकस्य विशति त्रासादयं वामनः ।
पर्यन्ताश्रयिभिर्निजस्य सदृशं नाम्नः किरातैः कृतं
कुब्जा नीचतयैव यान्ति शनकैरात्मेक्षणाशङ्किनः ॥

यथा च प्रियदर्शिकायां प्रथमेऽङ्के विन्ध्यकेतुवधस्कन्दे ।

उपसंहरति ।

एभिरङ्गैश्च० ॰नाटकलक्षणे ॥५५॥

कैशिकीं ॰प्रतिभान्तये ॥५६॥

सा तु सर्वे क्वचिदपि न वृत्त्यते न चोपपद्यते रसेषु हास्यादीनां भारत्यात्मकत्वात् । नीरसस्य च काव्यार्थस्य चाऽभावात् । तिस्र एवैता अर्थवृत्तयः । भारती तु शब्दवृत्तिरामुखमात्रत्वात् तत्रैव वाच्या ।

वृत्तिनियममाह ।

शृङ्गारे ॰भारती ॥५७॥

देशभेदभिन्नवेषादिस्तु नायकादिव्यापारः प्रवृत्तिरित्याह ।

देशभाषा ॰प्रयोजयेत् ॥५८॥

तत्र पाठ्यं प्रति विशेषः ।

पाठ्यं ॰क्वचित् ॥५९॥

क्वचिदिति देवीप्रभृतीनां सम्बन्धः ।

स्त्रीणां ॰शौरसेन्यधमेषु च ।

प्रकृतेरागतं प्राकृतम् । प्रकृतिः संस्कृतं तद्भवं तत्समं देशीत्यनेकप्रकारम् । शौरसेनी मागधी च स्वशास्त्रनियते ।

पिशाचा ॰तथा ॥६०॥

यद्देशं ॰भाषाव्यतिक्रमः ॥६१॥

स्पष्टार्थमेतत् ।

आमन्त्र्यामन्त्रकौचित्येनामन्त्रणमाह ।

भगवन्तो ॰मिथः ॥६२॥

आर्याविति सम्बन्धः ।

रथी  त ॥६३॥

मपिसप्तात् पूज्येन शिष्यात्मजानुजास्तातेति वाच्याः । सोऽपि तैस्तातेति सुगृहीतनामा चेति ।

भावोऽनुगेन  च ।

सूत्रधारः पारिपार्श्विकेन भाव इति वक्तव्यः । स च सूत्रिणामार्ष इति ।

देव  चाधमैः ॥६४॥

आमन्त्रणीया  स्त्रियः ।

पितृवद् वाविस्त्रियो भर्तृवदेव देव्यादिभिर्वाच्या ।

तत्र स्त्रियः प्रति विशेषः ।

समा  तथा ॥६५॥

कुट्टिन्यम्बे॰  शब्द्यते ॥६६॥

पूज्या जरती चाम्बेति । स्पष्टमन्यत् ।

चेष्टागुणो॰  शशिखण्डमौलिः ॥६७॥

दिङ्मात्रं दर्शितमित्यर्थः । चेष्टा लीलाद्या गुणा विनयाद्या उदाहृतयः संस्कृतप्राकृताद्या उक्तयः सत्त्वं निर्विकारात्मकं मनोभावः सत्त्वस्य प्रथमोविकारः तेन हावादयो ऽप्युपलक्षिताः ।

इति श्रीविष्णुसूनोर्धनिकस्य कृतौ दशरूपावलोके
नेतृप्रकाशो नाम द्वितीयप्रकाशः समाप्तः ।

# तृतीय प्रकाश

बहुवक्तव्यतया रसविचारातिलङ्घनेन वस्तुनेतृरसानां विभज्य नाटका-
दिषूपयोगः प्रतिपाद्यते ।

प्रकृति॰ नाटकमुच्यते ॥१॥

उद्दिष्टधर्मकं हि नाटकमनुद्दिष्टधर्माणां प्रकरणादीनां प्रकृतिः । शेषं प्रतीतम् ।

तत्र ।

पूर्वरङ्ग॰ नटः ॥२॥

पूर्वं रङ्ग्यतेऽस्मिन्निति पूर्वरङ्गो नाट्यशाला । तत्स्थप्रथमप्रयोग-व्युत्थापनादौ पूर्वरङ्गता । तं विधाय विनिर्गते प्रथमं सूत्रधारे तद्वदेव [1]वैष्णवस्थानकादिना प्रविश्यान्यो नटः काव्यार्थं स्थापयेत् । स च काव्यार्थं स्थापनात् सूचनात् स्थापकः ।

दिव्यमर्त्ये पात्रमथापि वा ॥३॥

स स्थापको दिव्यं वस्तु दिव्यो भूत्वा मर्त्यं च मर्त्यरूपो भूत्वा मिश्रं च दिव्यमर्त्ययोरन्यतरो भूत्वा सूचयेत् । वस्तु बीजं मुखं पात्रं वा । वस्तु यथोदात्तराघवे ।

> रामो मूर्ध्नि निधाय काननमगान्मालामिवाज्ञां गुरो-
> स्तद्भक्त्या भरतेन राज्यमखिलं मात्रा सहैवोज्झितम् ।
> तौ सुग्रीवविभीषणावनुगतौ नीतौ परां सम्पदं
> प्रोद्वृत्ता दशकन्धरप्रभृतयो ध्वस्ताः समस्ता द्विषः ॥

बीजं यथा रत्नावल्याम् ।

---

१ वीणावादनपरेण परिक्रमो वैष्णवस्थानकम् । आदिशब्दात् ताण्ड-वादिना परिक्रमा ग्राह्या इति क्वचित् टिप्पणी

द्वीपादन्यस्मादपि मध्यादपि जलनिधेर्दिशोऽप्यन्तात् ।
आनीय झटिति घटयति विधिरभिमतमभिमुखीभूतः ॥

मुखं यथा ।

प्रासादितप्रकटनिर्मलचन्द्रहासः
प्राप्तः शरत्समय एष विशुद्धकान्तः ।
उत्खाय गाढतमसं घनकालमुग्रं
रामो दशास्यमिव सम्भृतबन्धुजीवः ॥

पात्रं यथा शाकुन्तले ।

तवास्मि गीतरागेण हारिणा प्रसभं हृतः ।
एष राजेव दुष्यन्तः सारङ्गेणातिरंहसा ॥

रङ्ग   वृत्तिमाश्रयेत् ॥५॥

रङ्गस्य प्रसत्तिं काव्यार्थानुगतार्थैः श्लोकैः कृत्वा ।

औत्सुक्येन कृतत्वरा सहभुवा व्यावर्तमाना ह्रिया
तैस्तैर्बन्धुवधूजनस्य वचनैर्नीताभिमुख्यं पुनः ।
दृष्ट्वाग्रे वरमात्तसाध्वसरसा गौरी नवे सङ्गमे
संरोहत्पुलका हरेण हसता श्लिष्टा शिवा पातु वः ॥

इत्यादिभिरेव भारतीं वृत्तिमाश्रयेत् ।

सा तु ।

भारती   •प्रहसनामुखैः ॥६॥

पुरुषविशेषप्रयोज्यः संस्कृतबहुलो वाक्प्रधानो नटाश्रयो व्यापारो भारती । प्ररोचना वीथीप्रहसनामुखानि चास्यामङ्गानि ।

यथोद्देशं लक्षणमाह ।

उन्मुखीकरणं   प्ररोचना ।

प्रस्तुतार्थप्रशंसनेन श्रोतृणां प्रवृत्त्युन्मुखीकरणं प्ररोचना । यथा रत्नावल्याम् ।

श्रीहर्षो निपुणः कविः परिषदप्येषा गुणग्राहिणी
लोके हारि च वत्सराजचरितं नाट्ये च दक्षा वयम् ।

यस्त्वेकैकमपीह वाञ्छितफलप्राप्तेः पदं किं पुन
र्मद्भाग्योपचयादयं समुदितः सर्वो गुणानां गणः ॥

बोधो 'तत् पुनः' ॥६॥

सूत्रधारो 'तदामुखम्' ॥७॥

प्रस्तावना 'प्रयोगात' ॥८॥

तत्र कथाद्घातः ।

स्वेतिवृत्तसमं 'द्वितीय सः' ॥९॥

वाक्यं यथा रत्नावल्याम् । यौगन्धरायण । द्वीपादन्यस्मादपीति ।

वाक्यार्थं यथा वेणीसंहारे । सूत्रधारः ।

निर्वाणवैरिदहनाः प्रशमादरीणां
नन्दन्तु पाण्डुतनयाः सह केशवेन ।
रक्तप्रसाधितभुवः क्षतविग्रहाश्च
स्वस्था भवन्तु कुरुराजसुताः सभृत्याः ॥

ततोऽर्थेनाऽऽह । भीम ।

लाक्षागृहानलविषान्नसभाप्रवेशैः
प्राणेषु वित्तनिचयेषु च नः प्रहृत्य ।
आकृष्टपाण्डववधूपरिधानकेशाः
स्वस्था भवन्तु मयि जीवति धार्तराष्ट्राः ॥

अथ प्रवृत्तकम् ।

कालसाम्य प्रवृत्तकम् ।

प्रवृत्तकालसमानगुणवर्णनया सूचितपात्रप्रवेशः प्रवृत्तकं यथा ।

आसादितप्रकटनिर्मलचन्द्रहासः
प्राप्तः शरत्समय एष विशुद्धकान्तः ।
उत्खाय गाढतमसं घनकालमुग्रं
रामो दशास्यमिव सम्भृतबन्धुजीवः ॥

ततः प्रविशति यथानिर्दिष्टो रामः ।

अथ प्रयोगातिशयः ।

एषोऽस्मीत्यु०   मत ॥१०॥

यथा एष राजेव दुष्यन्त इति ।

अथ वीथ्यङ्गानि ।

उद्घात्यकावलगिते   मृदवम् ॥११॥

तत्र ।

गूढार्थपद०   समुच्यते ॥१२॥

गूढार्थं पद तत्पर्यायश्चेत्येवं माला । प्रश्नोत्तरं चेत्येवं वा माला । परस्परमुक्तिप्रत्युक्ती तद् द्विविधमुद्घात्यकम् । तत्राऽऽद्यं विक्रमोर्वश्यां यथा । विदूषकः । [1]भो वअस्स को एसो कामो जेण तुमं पि दूमिज्जसि सो किं पुरिसो आदु इत्थिअत्ति । राजा । सखे ।

मनोजातिरनाधीना सुखेष्वेव प्रवर्तते ।
स्नेहस्य ललितो मार्गः काम इत्यभिधीयते ॥

विदूषकः । [2]एवं पि ण जाणे । राजा । वयस्य इच्छाप्रभवः स इति । विदूषकः । [3]किं जो जं इच्छदि सो तं कामेदि त्ति । राजा । अथ किम् । विदूषकः । [4]ता जाणिदं जह अहं सूअआरसालाए भोअणं इच्छामि ।

द्वितीयं यथा पाण्डवानन्दे ।

का श्लाघ्या गुणिनां क्षमा परिभवः को यः स्वकुल्यैः कृतः
किं दुःखं परसंश्रयो जगति कः श्लाघ्यो य आश्रीयते ।
को मृत्युर्व्यसनं शुचं जहति के यैर्निर्जिताः शत्रवः
कैर्विज्ञातमिदं विराटनगरे छन्नस्थितैः पाण्डवैः ॥

---

१ भो वयस्य क एष कामो येन त्वमपि दूयसे स किं पुरुषोऽथवा स्त्रीति ।
२ एवमपि न जानामि ।
३ किं यो यदिच्छति स तत् कामयत इति ।
४ तज्ज्ञातं यथाहं सूपकारशालायां भोजनमिच्छामि ।

अथाऽवमर्शितम् ।

यत्रैकत्र •गिरोद्गिरा ॥१३॥

तथाऽत्र महावीरचरिते । समुत्पन्नवनविहारगर्भदोहदाया सीताया दोहदकार्ये समुप्रविश्य वनापवादारम्भे त्यागः । द्वितीय यथा छलितरामे । रामः । सम्प्रति तातवियुक्तामयोध्यां विमानस्थो नाहं प्रवेष्टुं शक्नोमि । तदन्तरीय गच्छामि ।

कोऽपि सिंहासनस्याऽत्र स्थितः पादुकयो पुरः ।

जटावानक्षमाली च चामरी च विराजते ॥

इति भरतदर्शनकार्यसिद्धि ।

अथ प्रपञ्चः ।

तद्गु_• •मतः ।

मतमूल_तमाऽर्थेन पारदार्यादिनैपुण्यादिना माध्मोप्यस्तुतिः स प्रपञ्चः । यथा कर्पूरमञ्जर्याम् । भैरवानन्द ।

[1]रण्डा चण्डा दिक्खिदा धम्मदारा मज्जं मंसं पिज्जए खज्जए अ ।

भिक्खा भोज्जं चम्मखण्डं च सेज्जा कोलो धम्मो कस्स णो होइ रम्मो ॥

अथ त्रिगतम् ।

श्रुतिसा• तविष्यते ॥१४॥

यथा विक्रमोर्वशीयाम् ।

> मत्तानां कुसुमरसेन षट्पदानां
> शब्दोऽयं परभृतनाद एष धीरः ।
> कैलासे सुरगणसेविते समन्तात्
> किन्नर्यः कलमधुराक्षरं प्रगीताः ॥

अथ छलनम् ।

प्रियाभैर• •छलम् ।

यथा वणीसंहारे । भीमार्जुनौ ।

---

1 रण्डा चण्डा दीक्षिता धर्मदारा मद्यं मांसं पीयते खाद्यते च ।
भिक्षा भोज्यं चर्मखण्डं च शय्या कौलो धर्मः कस्य न भवति रम्यः ॥

कर्ता द्यूतच्छलानां जतुमयशरणोद्दीपनः सोऽभिमानी
राजा दुःशासनादेर्गुरुरनुजशतस्याङ्गराजस्य मित्रम् ।
कृष्णाकेशोत्तरीयव्यपनयनपटुः पाण्डवा यस्य दासाः
क्वास्ते दुर्योधनोऽसौ कथयत पुरुषा द्रष्टुमभ्यागतौ स्वः ॥

एष वाक्केली ।

विनि॰ ऽपि वा

अन्येति वाक्यस्य प्रक्रान्तस्य साकाङ्क्षस्य विनिवर्तनं वाक्केली द्विस्त्रिर्वा उक्तिप्रत्युक्तयः । तत्राद्या यथोत्तररामचरिते । वासन्ती ।

त्वं जीवितं त्वमसि मे हृदयं द्वितीयं
त्वं कौमुदी नयनयोरमृतं त्वमङ्गे ।
इत्यादिभिः प्रियशतैरनुरुध्य मुग्धां
तामेव शान्तमथवा किमतः परेण ॥

उक्तिप्रत्युक्तितो यथा रत्नावल्याम् । विदूषकः । [1]भोदि मअणिए मं पि एदं चच्चरिं सिक्खावेहि । मदनिका । हदास ण क्खु एसा चच्चरी दुवदिखण्डअं क्खु एदम् । विदूषकः । भोदि किं एदिणा खण्डेण मोदआ करीअन्ति । मदनिका । ण हि पढीअदि क्खु एदमित्यादि ।

यथाऽधिबलम् ।

अन्योन्य॰ भवेत् ।

यथा वेणीसंहारे । अर्जुनः ।

सकलरिपुजयाशा यत्र बद्धा सुतैस्ते
तृणमिव परिभूतो यस्य गर्वेण लोकः ।
रणशिरसि निहन्ता तस्य राधासुतस्य
प्रणमति पितरौ वां मध्यमः पाण्डुपुत्रः ॥

इत्युपक्रमे । राजा । अरे नाहं भवानिव विकत्थनाप्रगल्भः । किन्तु ।

१ भवति मदनिके मामपीमां चर्चरीं शिक्षय ।—हताश न खलु एषा चर्चरी द्विपदीखण्डकं खल्वेतत् ।—भवति किमेतेन खण्डेन मोदकाः क्रियन्ते ।—न हि पठ्यते खल्वेतत् ।

विदूषकं प्रति। यथा उत्सवे यस्तया कममन्दा लक्षित। विदूषक। [1]पढमं पच्चूसे बम्हणस्स पूआ भोदि सा तए लङ्घिदा। मालविका स्मयते इत्यादिना नायकस्य विश्रम्भनाभिकार्योपयुक्तेन हास्यसाधकारिणा वचनेन व्याहारः।

अथ मृदवम्।

दोषा॰ ॰तत् ॥१८॥

यथा शाकुन्तले।

मेदश्छेदकृशोदरं लघु भवत्युत्थानयोग्यं वपुः
सत्त्वानामुपलक्ष्यते विकृतिमच्चित्तं भयक्रोधयोः।
उत्कर्षः स च धन्विनां यदिषवः सिध्यन्ति लक्ष्ये चले
मिथ्यैव व्यसनं वदन्ति मृगयामीदृग् विनोदः कुतः॥

इति मृगयादोषस्य गुणीकारः।

यथा च।

सततमपि तमानममायासहस्रसङ्कुलम्।
सततमिव मधिवास जीवति राजा जिगीषुरयम्॥

इति राज्यगुणस्य दोषीभावः।

उभयं वा।

सन्तः सच्चरितोदयव्यसनिनः प्रादुर्भवद्यन्त्रणाः
सर्वत्रैव जनापवादचकिता जीवन्ति दुःखं सदा।
अव्युत्पन्नमतिः कृतेन न सता नैवासता व्याकुलो
युक्तायुक्तविवेकशून्यहृदयो धन्यो जनः प्राकृतः॥

इति प्रस्तावनाङ्गानि।

एषा॰ प्रपञ्चयेत् ॥१९॥

तत्र।

अभिगम्य॰ ॰महीपतिः ॥२०॥

प्रख्यातवंशो॰ ॰ऽर्थकारिकम् ॥२१॥

---

१ प्रथमं प्रत्युषे ब्राह्मणस्य पूजा भवति सा तया लङ्घिता।

यथा वा। प्रिये किमेतत्।

> विनिश्चेतुं शक्यो न सुखमिति वा दुःखमिति वा
> प्रमोहो निद्रा वा किमु विषविसर्पः किमु मदः।
> तव स्पर्शे स्पर्शे मम हि परिमूढेन्द्रियगणो
> विकारः कोऽप्यन्तर्जडयति च तापं च कुरुते॥

यथा च ममैव।

> लावण्यामृतवर्षिणि प्रतिदिशं कृष्णागरुश्यामले
> वर्षाणामिव ते पयोधरभरे तन्वङ्गि दूरोन्नते।
> नासावंशमनोज्ञकेतकतनुभ्रूपत्त्रगर्भोल्लसत्
> पुष्पश्रीस्तिलकः सहेलमलकैर्भृङ्गैरिवाऽऽपीयते॥

चेष्टास्तत्र प्रति ॥६४॥

तासां लीलाद्युक्तयो नायकप्रकाशे दर्शिताः।

रमयेत् न च ॥६५॥

ग्राम्यः सम्भोगः रङ्गे निषिद्धोऽपि काव्येऽपि न कर्तव्य इति पुनर्नि षिध्यते। यथा रत्नावल्याम्।

> स्पृष्टस्त्वयैव दयिते स्मरपूजाव्यापृतेन हस्तेन।
> उद्भिन्नापरमृदुतरकिसलय इव लक्ष्यतेऽशोकः॥

इत्यादि। नायकनायिकाकैशिकीवृत्तिनाटकनाटिकालक्षणात् पुनः कवि परम्परावगतं स्वयमौचित्यसम्भावनानुगुण्येनोत्प्रेक्षितं चानुसन्धाय सुकविः शृङ्गारमुपनिबध्नीयात्।

अथ वीरः।

वीरः ॰प्रहर्षाः ॥६६॥

प्रतापविनयादिभिर्विभावितः करुणायुद्धदानादिभिरनुभावितो गर्वधृति हर्षामर्षस्मृतिमतिवितर्कप्रभृतिभिर्भावित उत्साहः स्थायी स्वदते भाव कमनोविस्तारानन्दाय प्रभवतीत्येष वीरः। तत्र दयावीरो यथा नागान न्दे जीमूतवाहनस्य। युद्धवीरो वीरचरिते रामस्य। दानवीरः परशुराम बलिप्रभृतीनाम्।

सा मां वक्त्रासवं वेत्ति मांसपिण्डौ पयोधरौ ।

मांसास्थिवर्जं वचनं जनः कामग्रहातुरः ॥

न चायं शान्त एव विरक्तो यतो बीभत्समानो विरज्यते ।

अथ रौद्रः ।

क्रोधो वैमात्य ॥६८॥

मात्सर्यविभावो रौद्रो यथा वीरचरिते ।

त्वं ब्रह्मवर्चसधरो यदि वर्तमानो
यद्वा स्वजातिसमयेन धनुर्धरः स्याः ।
उग्रेण भोस्तव तपस्तपसा दहामि
पक्षान्तरस्य सदृशं परशुः करोति ॥

वैरिवैकृताद्यथा वेणीसंहारे ।

लाक्षागृहानलविषान्नसभाप्रवेशैः
प्राणेषु वित्तनिचयेषु च नः प्रहृत्य ।
आकृष्टपाण्डववधूपरिधानकेशाः
स्वस्था भवन्तु मयि जीवति धार्तराष्ट्राः ॥

इत्येवमादिविभावैः प्रस्वेदरक्तवदननयनाद्यनुभावैः अमर्षादिव्यभिचारिभिः क्रोधपरिपोषो रौद्रः । परशुरामभीमसेनदुर्योधनादिव्यवहारेषु वीरचरितवेणीसंहारादेरनुगन्तव्यः ।

अथ हास्यः ।

विकृता स्मृतः ॥६९॥

आत्मस्थान् विकृतवेषभाषादीन् परस्थान् वा विभावानवलम्बमानो हासस्तत्परिपोषात्मा हास्यो रसो द्व्यधिष्ठानो भवति । स चोत्तममध्यमाधमप्रकृतिभेदात् षड्विधः ।

आत्मस्थो यथा रावणः ।

जातं मे परुषेण भस्मरजसा तच्चन्दनोद्धूलनं
हारो वक्षसि यज्ञसूत्रमुचितं क्लिष्टा जटाः कुन्तलाः ।

